# आवश्यकं निवेदनम्

वर्तमानायां शिक्षापरीक्षापद्धतौ निबन्धलेखनमपि एकः परमावश्यको विषयो वर्तते। यद्यपि संस्कृतशिक्षाविभागे पूर्वं निबन्धविषये पूर्णं ध्यानं न दीयते स्म परन्तु सम्प्रति शनैः शनैः संस्कृत शिक्षायामपि अस्य विषयस्य समादरो वर्द्धमानो विलोक्यते अत एव संस्कृतेऽपि बहूनि निबन्धपुस्तकानि लघूनि, मध्यमानि, बृहन्ति च प्रकाशितानि दृश्यन्ते। एतेषां पुस्तकानां पठनेन नूनमेव विद्यार्थिनां सुमहान् लाभः सम्भाव्यते। परन्तु संस्कृतच्छात्राणां भाषाज्ञानवृद्धये यादृशानि सरलानि पुस्तकानि अपेक्ष्यन्ते तादृशानि पुस्तकानि प्रायः विरलान्येव। अत एव अस्माभिः पुस्तकमिदं लिखितं प्रकाशितं च कतिपयवर्षेभ्यः पूर्वं यस्य इदं द्वितीयं संस्करणं सम्प्रति प्रकाश्यते।

अस्मिन् पुस्तके यथासम्भवं जटिलसन्धिरहितायां, स्वल्पसमासायां, सरल-ललितायां, प्रवाहपूर्णायां च संस्कृतभाषायाम् एकत्रिंशत् निबन्धाः लिखिताः सन्ति। इदं च पुस्तकं न केवलं निबन्ध विषयज्ञानाय एव लिखितं प्रत्युत संस्कृतभाषायां सरलतया प्रवेशाय तथा अनुवादविषयक-योग्यता संवर्द्धनाय अपि। अत एव निबन्धेषु स्थले स्थले सर्वासां विभक्तीनां सर्वेषां तिङन्त-कृदन्त-पदानां च सामूहिकरूपेण विपुलः सन्निवेशो विहितो वर्तते येन अनुवादलेखने, भाषणे भाषाविषयक-व्युत्पत्ति-वर्द्धने च छात्राणां महान् लाभो जायेत। यदि अनया दृष्ट्या विद्यार्थिनः पुस्तकमिदं पठिष्यन्ति मुहुर्मुहुश्च वाचयिष्यन्ति तर्हि निस्संशयं स्वल्पेनैव कालेन तेषां भाषाज्ञानं वर्द्धिष्यते भाषणादिषु च ते कामं समर्थाः भविष्यन्ति।

निबन्धेषु सर्वेषु पुस्तकस्य अन्ते निदर्शनरूपेण कानिचित् पत्राणि अपि सन्निविष्टानि सन्ति। तथैव व्याख्यानदानस्य तदुपसंहारस्य च

शैली सन्निवेशिता वर्तते । एवं च एतत्पुस्तकद्वारा पत्रलेखने व्याख्यान-दाने च सम्यक् साहाय्यं लब्धुं शक्यते ।

आशासे, भविष्णवो विद्यार्थिनः सेवामिमां सहर्षं स्वीकरिष्यन्ति मदीयमुद्देश्यं च सफलीकरिष्यन्ति इति ।

अनन्तचतुर्दशी २०२० — संस्कृतभाषाया हितचिन्तकः— लेखकः

## सन्धिविषये एकं निवेदनम्

सन्धिं विहाय पदानां पृथक् पृथक् लेखनेन वाचने अर्थज्ञाने च सौविध्यं भवति इति सर्वैरेव अनुभूयते । अतः संस्कृतभाषायाः सारल्येन प्रचारः स्यादेतदर्थं सन्धिरहितायाः संस्कृतभाषाया लेखनस्य आवश्यकता वर्तते । परन्तु सर्वथा सन्धिपरित्यागेऽपि भाषायाः सौन्दर्यं नश्यति, प्रवाहश्च क्वचित् क्वचित् अवरुद्धो जायते । अतः सर्वथा सन्धिपरित्यागोऽपि भाषया सह अन्याय्य एवास्ति । अस्मिन् विषये बहुधा विचिन्तयन्नपि अहं सिद्धान्तरूपेण इदं निश्चेतुं न पारितवान् यत् कुत्र सन्धिः कर्तव्यः कुत्र च न कर्तव्यः । अतः पुस्तकेऽस्मिन् कामपि नीतिम् अनिवार्यं एव सरलतादृष्ट्या सन्धेः प्रयोगः अप्रयोगो वा विहितो वर्तते ।

एतद्विषये माननीयाः पण्डिताः सादरं निवेद्यन्ते यत् "संस्कृत भाषायाः सौन्दर्यं प्रवाह-परिरक्षणपूर्वकं सरलतया प्रचारार्थं कुत्र सन्धि-र्विधेया कुत्र च न विधेया" इति विषये स्वीया सुविचारिता सम्मतिं दत्त्वा अनुकम्पनीयोऽयं जन इति—

विनीत-निवेदकः—
लेखकः—

# वर्तमानसंस्कृतशिक्षाया एको महान् दोषः तन्निराकरणस्य आवश्यकता च

"भाषणेनाथ लेखेन स्वाभिप्राय-प्रकाशनम्" ।
भाषायाः शिक्षणस्येदं फलं सर्वैः प्रकीर्तितम् ॥

परं संस्कृत-भाषायाः सुचिरं शिक्षणादपि ।
लेखने भाषणे चापि योग्यता नैव जायते ॥

पठन्ति बहवश्छात्राः परीक्षा उत्तरन्ति च ।
परन्तु लेखितुं वक्तुं दृश्यन्ते नैव ते क्षमाः ॥

उषित्वा बहु-वर्षाणि रटित्वा च दिवानिशम् ।
व्ययित्वा विपुलं धान्यं छात्रास्तिष्ठन्ति मूकवत् ॥

छात्रा आचार्यवर्गेऽपि पठन्तः श्मश्रुला अपि ।
संस्कृते न क्षमाः कर्तुं सम्यक् भाव-प्रकाशनम् ॥

वदन्त्यर्धं हसन्त्यर्धं खुं खुं च बहु कुर्वते ।
अनेकाः कुर्वतेऽशुद्धीरपि सामान्य-भाषणे ॥

अयमेको महान् दोषो महतीयं त्रुटिस्तथा ।
अयं संस्कृतशिक्षायै लज्जाया विषयो महान् ॥

तस्मादेतस्य दोषस्य सम्यग् नाशाय सत्वरम् ।
छात्रैरध्यापकैश्चापि सुप्रयत्नो विधीयताम् ॥

तदर्थमनुवादस्य निबन्धविषयस्य च ।
शिक्षणे लेखने चापि ध्यानं देयं विशेषतः ॥
अस्माकं पाठशालासु पठने पाठने तथा ।
रटने चापि सर्वेषां दृश्यते यादृशी रुचिः ॥

न तथा भाषणे लेखेऽनुवादस्य च शिक्षणे ।
निबन्धलेखने चापि दृश्यते कस्यचिद् रुचिः ॥
तस्माद् विद्यार्थिवर्गस्य बहूनां विदुषां तथा ।
न व्युत्पत्तिर्न भाषायामधिकारो विलोक्यते ॥
अनेन हेतुना सर्वे छात्रास्तिष्ठन्ति लज्जिताः ।
तथा संस्कृतशिक्षाया उपहासश्च जायते ॥

अतस्तां दूषितां रीतिं त्यक्त्वा विद्यार्थिभिर्बुधैः ।
पण्डितैश्चापि भाषाया ज्ञाने वृद्धिर्विधीयताम् ॥
एतत्कार्यालयद्वारा भाषाज्ञानस्य वृद्धये ।
सरलं ललितं चापि सत् साहित्यं प्रकाशितम् ॥
तद् गृहीत्वा तदभ्यासं कृत्वा चापि निरन्तरम् ।
भवन्तु सकलाश्छात्रा वक्तारो लेखकास्तथा ॥

विनम्र-निवेदकः
सार्वभौम संस्कृत प्रचार कार्यालयः
वाराणसी ।

# विषय-सूची

# निबन्ध-लेखकेभ्य:

[ १ ]

रीतिं विचिन्त्य, विगणय्य गुणान्, विगाह्य
शब्दार्थसार्थ—मनुसृत्य च सूक्तिमुद्राः।
कार्यो निबन्ध—विषये विदुषा प्रयत्नः
के पोतयन्त्र—रहिता जलधौ प्लवन्ते॥

—राजशेखरस्य

[ २ ]

शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् शुभान्।
अक्षरान् वै लिखेद् यस्तु लेखकः स वरः स्मृतः॥

—अग्निपुराणस्य

[ ३ ]

अतिकार्श्यम्, अतिस्थौल्यं वैषम्यं पङ्क्तिवक्रता।
अतुल्यानां च सादृश्यम् अविभागः पदेषु च॥
लेखदोषा इमे प्रोक्ताः संत्याज्या लेखकैः सदा॥

—कस्यापि प्राचीनग्रन्थस्य

॥ वाग्देवतायै नमः ॥

## सरल—

# संस्कृत-निबन्धादर्शः

उपकृतये छात्राणाम्
संस्कृतभाषा-प्रचार-वृद्धये च ।
एष निबन्धादर्शो
विलिख्यते सरलभाषयाऽस्माभिः ॥

## माता-पितृ-भक्तिः ।

इह जगतीतले जीवानां यथा मातापितरौ उपकारं कल्याणं च कुरुतो न तथा अन्यः कोऽपि । अन्ये जना अल्पकालार्थं सहायका उपकारिणो वा भवन्ति परं मातापितरौ तु जन्मकालात् आरभ्य[1] मरणकालं यावत्[2] सर्वदैव स्वपुत्राणां साहाय्ये, उपकारकरणे, कल्याण-सम्पादने च निरतौ[3] तिष्ठतः[4] ।

अवलोकय तु तावत् । माता हि नव मास पर्यन्तं महता क्लेशेन पुत्रं गर्भे धारयति । यथा च तस्य कष्टं न भवेत् तथैव चेष्टते तथैव च आचरति । अनन्तरं पुत्रे उत्पन्ने तस्य सेवायां रक्षायां च संलग्ना भवति । तस्यैव लालने पालने पोषणे संवर्द्धने च सततं दत्तचित्ता

---

१—लेकर । २—तक । ३—संलग्न । ४—रहते हैं ।

महान्त चिकित्साधिकारिणमेव कर्तुं प्रयतते। कथनस्य इ- तापय वर्तते यत् सर्वे एव पितर स्वस्वपुत्रस्य अभ्युन्नतये सुखसाधनाय च सर्वप्रकारेण प्रयन विदधति।

इयमेव मातु पितुश्च उपकारस्य स्नेहस्य वात्सल्यस्य च कथा अस्ति। अत एव अस्माक शास्त्रेषु मातु पितुश्च सेवाया भक्तेश्च महायान् महिमा वर्णितो वर्तते। यदा अस्मान् उपकाराय कल्याणाय उन्नतये सुखाय च मातापितरौ एव प्रकारेण प्रयन कुरुत तदा अस्माभिरपि तथैव प्रकारेण तय सेवा शुश्रूषा च कर्तव्या। तयो आज्ञाया पालन कर्तव्यम्। तथा च आचरण कर्तव्य यथा माता पिता च उभौ अपि सुखिनो सतुष्टा प्रसन्नमानसौ च स्याताम्। यथा तौ आदेशेता[१८] तथा चलितव्यम्। श्रद्धया भक्त्या विनयेन च सदा तयो सत्कार सम्मानश्च विधातव्य। अहरहश्च वन्दनीयौ। न च तथा एक मपि काय कर्तव्य येन तयो स्वल्पमपि कष्ट भवत्, क्वाचन् । मन्ता धा उत्पद्यत। इदमेव पुत्राणा कर्तव्यम्। एष एव धर्म। इयमेव शास्त्रकाराणामाज्ञा। अयमेव च लोक परलोकयो परम श्रेयस्कर पथा। अत एव शास्त्रेषु लिखित वर्तते—

> य मातापितरौ क्लेश सहेत सम्भवे नृणाम्।
> न तस्य निष्कृति कर्तुं शक्या वर्षशतैरपि॥
> तयोर्नित्य प्रिय कुर्यात् आचार्यस्य च सर्वदा।
> तेष्वेव त्रिषु तुष्टेषु तप सर्वं समाप्यते॥
>
> [ मनु० २ २२७ २२८ ]

अस्माक साहित्ये मातृभक्ताना पितृभक्ताना च अनेका कथा लिखिता सन्ति। भगवान् रामचन्द्र पितु आज्ञया चतुर्दशवर्ष-पर्यन्त वने वासमकरोत्। श्रवणकुमार स्वकीयौ अन्धौ मातापितरौ स्कन्धयो

---

१८—आदेश दें।

उपरि एव सदा वहति स्म । महात्मा भीष्मः पितुरेव प्रसन्नतायै आजीवन कठोर ब्रह्मचर्यव्रत धारितवान् । पितुरेव सुखोपभोगाय पुरुः स्वकीयं यौवन पित्रे दत्तवान् । एवम् अस्माकं देशे ईदृशा अनेके माता-पितृ-भक्ता महापुरुषा बभूवुः येषा नामानि अद्यापि गृहे गृहे गीयन्ते ।

तथैव यदि वयमपि माता-पितृ-भक्ता भविष्यामः तदा अस्माकमपि परम कल्याणं, सुमहान् समादरः महती च कीर्तिः भविष्यति । अतः सर्वैरेव जनैः मातृभक्तैः पितृभक्तैश्च भवितव्यम् ।

---

# गुरुभक्तिः ।

अस्माकं शास्त्रेषु यथा मातापितृभक्तेः महिमा वर्णितो वर्तते तथैव गुरुभक्तेरपि । माता पुत्र जनयित्वा[१] तस्य लालन-पालनादिक करोति, पिता च त शिक्षणाय पाठशालाया प्रेषयति, आर्थिकं साहाय्य च कुरुते, परन्तु शिक्षा-दीक्षादिना तस्य वस्तुतः कल्याण तु गुरुरेव साधयति[२] ।

सद्-गुरुः न केवल विद्यामेव शिक्षयति । न च केवल पुस्तकाना पाठमेव पाठयति । अपि तु स शारीरिकीं नैतिकीं व्यावहारिकीं बौद्धिकी-मपि च शिक्षा ददाति । स सदाचारस्य सयमस्य, विनयस्य विवेकस्य, यमस्य नियमस्य, दयाया दाक्षिण्यस्य तथा शीलस्य सद्व्यवहारस्य च उपदेश ददाति । किं कार्य कर्तव्य किं न कर्तव्यम्, केन पथा[३] चलितव्यम् केन न चलितव्यम्, कुत्र गन्तव्य कुत्र न गन्तव्यम्, कस्य सङ्गतिः कर्तव्या कस्य न कर्तव्या, इत्यादिकं सर्वमेव शिष्याय बोधयति[४] । गुरुः

१—पैदा कर । २—करता है । ३—मार्ग से । ४—समझाता है, बतलाता है ।

अज्ञानान्धकारं दूरे कृत्वा ज्ञानस्य दिव्यं प्रकाशं शिष्याय वितरति[५]। शिष्यस्य पशुभावम् अपनीय[६] गुरुः तं वस्तुतो मानवं कल्पयति[७]। गुरुः उपदेशाऽमृतं पाययित्वा[८] शिष्यं मृत्युभयात् मोचयति[९] तस्मै अमरत्वं च प्रयच्छति[१०]। असन्मार्गात् निवार्य सन्मार्गे प्रवर्तयति[११]। न च केवलं शिक्षयत्येव प्रत्युत तस्य पुत्रवत् पालनमपि करोति। एवञ्च विविध-विद्या-शिक्षणेन, सदुपदेश प्रदानेन, सतत-संरक्षणेन, पुत्रवत् पालनेन, सन्मार्ग प्रदर्शनेन· असन्मार्ग निवर्तनेन च यथा गुरवः शिष्याणां हितं कुर्वन्ति, यथा च तेषां कल्याणं साधयन्ति न तथा अन्यः कोऽपि कर्तुं पारयति। वस्तुतः अपारे संसार-सागरे निमज्जताम्[१२] उन्मज्जतां[१३] च जनानां पारेकरणाय निपुणो नाविको[१४] गुरुरेव। गुरुरेव च भयावह्या महति अन्धकारे इतस्ततो भ्रमतां भ्रान्तानां पथश्च्युतानां पथिकानां मार्गदर्शको महादीपः। स एव च अज्ञानाऽन्धानाम् इतस्ततो रागद्वेषादि-गर्तेषु पततां निपततां च जनानाम् अभिनव-दृष्टि-दायको वैद्यराजः।

अनेनैव कारणेन शास्त्रेषु गुरुसेवायाः गुरुभक्तेः गुरुपूजायाश्च महत् माहात्म्यं लिखितं वर्तते। अस्मिन् विषये शास्त्रेषु अनेके श्लोकाः मिलन्ति। यथा—

गुरुर्गरीयान् पितृतो मातृतश्चेति मे मतिः।

❀ ❀ ❀ ❀

शरीरमेव सृजतः पिता माता च भारत।
आचार्यशिष्टा या जातिः सा दिव्या साऽजराऽमरा॥

[ म० भा० शान्ति० अ० १०८]

अतोऽस्माभिः सर्वैरपि मर्त्यैः गुरूणां भक्तिः सेवा पूजा च

---

५—देता है। ६—हटाकर। ७—बनाता है। ८—पिला कर। ९—छुड़ाता है। १०—देता है। ११—लगाता है। १२—डूबते हुओं का। १३—उतराते हुओं का। १४—मल्लाह।

कर्तव्या । प्रतिदिनं तेषां चरणेषु शिरसा प्रणामः कर्तव्या । तेषां सर्वे एव आदेशाः पालनीयाः । न तु कदाचिदपि आज्ञाया उल्लंघनं कर्तव्यम् । ते यथा वर्तयेयु[15] तथैव वर्तितव्यम्[16] यथा चालयेयु तथैव चलितव्यम्, यथा च आज्ञापयेयु तथैव विधातव्यम् । सर्वदा च तेषां सेवायां शुश्रूषायां स्वागतविधौ सत्कारे च सावधानैः भवितव्यम् ।

अपि च । नहि कदाचित् गुरु-सन्निधौ[17] उच्चैः हसितव्यम् । न च पादौ प्रसार्य[18] पुरस्तात्[19] स्थातव्यम् । नहि तत्र चञ्चलता प्रकटनीया । न च उद्दण्डता औद्धत्यं वा कर्तव्यम् । न तैः सह विवादः कर्तव्यः । न असत्यं वक्तव्यम् । न अपलापो[20] विधेयः । न अविनयो दर्शनीयः । नहि अभद्रा वाचः समुच्चारणीयाः । न च तत्समक्षं कलहः कोलाहलो वा विधेयः । न च स्वप्नेऽपि गुरुषु ईर्ष्या द्वेषः मात्सर्यं वा कदाचित् विदधीत । शिष्याणाम् इमे एव आचारा इमे एव च व्यवहाराः प्रशंसनीया भवन्ति । ईदृशैरेव आचारैः ईदृशैरेव च व्यवहारैः गुरवः शिष्येषु प्रसीदन्ति, दयां कुर्वन्ति, अनुरक्ता भवन्ति, सर्वं वेदितव्यं वेदयन्ति, अखिलम् च उपदेष्टव्यं उपदिशन्ति । प्रसन्नेषु च गुरुषु शिष्याणां सर्वतोमुखी प्रतिभा जायते, बुद्धिः विकासं प्राप्नोति, विद्या सफलता गच्छति, परितो यशः प्रसरति, सर्वविधं च मङ्गलं जायते ।

प्राचीनकाले एतादृशा बहवो गुरुभक्ता बभूवुः येषामुपाख्यानं श्रुत्वा पठित्वा च महद् आश्चर्यं जायते । आरुणिः निजगुरोः चत्ररक्षणाय स्वशरीरमेव बन्ध रूपम् अकरोत् । एकलव्यो गुरोः मृत्तिकामयीमेव मूर्तिं पुरतो निर्माय तद्भक्त्या शस्त्रचालने महतीं कुशलतां प्राप ।

अस्मिन् समये प्रायेण अनेके विद्यार्थिनो गुरुषु यथोचितां भक्तिं न कुर्वन्ति । न तेभ्यः सम्यक् प्रणमन्ति । न यथावत् तेषाम् आदेशस्यैव

---

१५—करें । १६—रहना चाहिये । १७—पास में । १८—पसार कर । १९—आगे । २०—बहाना ।

पालन कुर्वन्ति । न च सविनयं व्यवहरन्ति । नाऽपि सेवन्ते । न च समाद्रियन्ते । न च अनुशासनं मन्यन्ते । नहि ईदृशाः छात्राः शिष्टाचारं विचारयन्ति । यथेष्टं ते आचरन्ति यथेष्टं च व्यवहरन्ति । परन्तु अयं कल्याणकरः पन्थाः नास्ति । ईदृशेन शास्त्रविरुद्धेन अनुचितेन च व्यवहारेण विद्यार्थिनां कथमपि हितं न भवितुमर्हति । अतो ये छात्राः आत्मनः कल्याणमिच्छन्ति, यशः समीहन्ते, सफलताम् अभिलषन्ति, विशिष्टञ्च वैदुष्यं कामयन्ते तैः सदैव गुरुभक्तिः कर्तव्या । विनयेन, सेवया, श्रद्धया, सत्कारेण, आदेशपालनेन, पितृवत्पूजनेन, उपचारेण च सर्वदैव गुरवः प्रसादनीयाः ।



# विद्या

संसारे बहूनि वस्तूनि सन्ति परं तेषु सर्वश्रेष्ठं वस्तु विद्या एव वर्तते । केवलं जन्मना मनुष्यः मनुष्यो न भवति अपि तु विद्यया एव । विद्यया हीनाः मनुष्याः मनुष्यरूपं धृत्वा अपि पशुवत् आचरणं कुर्वन्ति । किं कर्तव्यम्, किम् अकर्तव्यम्, को धर्मः कः अधर्मः, कः सन्मार्गः कश्च असन्मार्गः इति ते सम्यग् न जानन्ति । अत एव ते विपरीतम् आचरन्ति पदे पदे च कष्टं लभन्ते । परन्तु ये विद्यां पठितवन्तः ते सर्वमपि कर्तव्याऽकर्तव्यादिकं जानन्ति । यथोचितम् आचरन्ति । अत एव च ते सुखमयं जीवनं यापयन्ति । अत एव विद्या सर्वेषु अपि वस्तुषु श्रेष्ठं मन्यते ।

सर्वेषु धनेषु अपि प्रधानं धनं विद्या एवास्ति । कथमिदम् । यतो हि अन्यानि सर्वविधानि धनानि चौराः चोरयन्ति, अग्निः भस्मसात् करोति, जलं वाहयति, राजा हरणं कारयति, दायादाः विभजन्ते, कीटकाः

भूषणानि धारयन्तोऽपि न शोभन्ते न च समाद्रियन्ते एव । तेषां तावदेव शोभा भवति यावत् ते मौनं धारयन्ति । वर वदनकाले समुपस्थिते तु सर्वाण्यपि तेषां भूषणानि निरर्थकानि जायन्ते । अतो विद्या एव सर्वोत्तमं भूषणम् । तथाहि—

> केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः
> न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः ।
> वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
> क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥
> ( भर्तृहरि शतकम् )

सर्वासाम् उन्नतीनामपि निदानं विद्यैव अस्ति । व्यक्तेः जातेः समाजस्य राष्ट्रस्य वा समुन्नतिः विद्यया एव कर्तुं शक्यते । यस्यां जातौ, यस्मिन् समाजे राष्ट्रे वा विद्यायाः यावान् प्रचारः वर्तते तावती एव तस्य समुन्नतिः दृश्यते । रूस, अमेरिका इङ्गलैण्ड प्रभृतयो ये ये देशाः सम्प्रति श्रेष्ठाः मन्यन्ते ते विद्याया एव बलेन श्रेष्ठतां गताः । विद्यायाः बलेनैव ते विज्ञाने वाणिज्ये शिल्पकलायां शस्त्रनिर्माणे शास्त्रनिर्माणे च अन्यदेशेभ्यः समुन्नता मन्यन्ते । सर्वत्र च तेषां विजयपताका समुच्छ्रयति ।

विद्याया एव प्रभावेण अनेके नव-नवा आविष्काराः आविष्कृता विदेशवासिभिः वैज्ञानिकैः । सम्प्रति वायुयानद्वारा अल्पीयसा कालेन जना दूराद् दूरतरं यान्ति । "तार" द्वारा दूरस्थितेन जनेन सह जना वार्तालापं कुर्वन्ति । "रेडियो" द्वारा अति दूरदेशे जायमानं गीत भाषणादिकं च जनाः समीपवत् शृण्वन्ति । बहु-समय-साध्यानि बहुजन-साध्यानि च कर्माणि यन्त्रबलेन सम्प्रति अल्पकालेन अल्पैरेव च जनैः साधयितुं शक्यन्ते । तद् इमानि आश्चर्यजनकानि कार्याणि कथं सम्भवन्ति ? विद्याया एव बलेन तु ।

किं नाम अधिकं निरूपयामः । सर्वथा सिद्धं खलु विद्याया

माहात्म्यम्। विद्यया हि विनयो विवेकः प्रतिष्ठा यशः सौजन्य महत्त्वं वित्तं चेत्यादि सर्वमपि लब्धुं शक्यते। अतः सर्वैरेव बालकैः पूर्ण-परिश्रमेण सह विद्याया अध्ययन कर्तव्यम्। स्वसमाजे सर्वत्र विद्यायाः प्रचारः कर्तव्यः। तथा च अस्माभिः प्रयत्नो विधीयेत यथा प्रतिग्राम पाठशालाः स्थापिताः स्युः। सर्वे च भारतीया जना. शिक्षिता भवेयुः। एकोऽपि जनो निरक्षरो न मिलेत्। तदैव अस्माकमपि देशः पुनः पूर्ववत् प्रतिष्ठितो भविष्यति। अन्येषु च देशेषु सम्मान लप्स्यते।

बहवो विद्यार्थिनः परिश्रमेण अध्ययन न कुर्वन्ति। इतस्ततः पलायन्ते। वृथा भ्रमन्ति। निरर्थकं वटु जल्पन्ति। खेलने कूर्दने शयने च दिनानि अतिवाहयन्ति[६]। पुनः पुनः प्रेरिता अपि ध्यानं न ददते। ताड्यमाना अपि स्वभावं न परित्यजन्ति। अन्ते च ते विद्याहीनाः सन्तो गुरोः पितुः मातुश्च महान्तं क्लेशं जनयन्ति। स्वयं च पदे पदे कष्टं सहमानाः, परान्नं प्राप्नुवन्तः दुःखमयं जीवनं यापयन्ति। अतो विद्यार्थिभिः आलस्यादिकं विहाय परिश्रमेण यत्नेन च विद्याभ्यासः कर्तव्यो येन स्वस्य स्वदेशस्य च महान् उपकारः सपद्येत।

---

## बलं व्यायामश्च

सर्वेषामपि मनुष्याणां कृते यथा विद्याया आवश्यकता वर्तते तथैव बलस्यापि। विद्या बलञ्च उभौ अपि पदार्थौ मानवजीवनस्य समुन्नतये संरक्षणाय च परमोपयोगिनौ परमाऽवश्यकौ च। यद्यपि विद्या विना तु जनो बाहुबलेन यथाकथञ्चित् स्वनिर्वाहं कर्तुं शक्नोति अपि, परं बल

---

६—बिताते हैं।

विना तु बलमपि कार्य-सञ्चालन न भवितुमर्हति। विद्याविहीना अपि जना बले सति परिश्रमं कृत्वा येन केनापि प्रकारेण जीवितु क्षमन्ते, परं यदि बल न स्यात् तदा तु विद्वान् अविद्वान्, धनी निर्धनो वा किमपि स्वार्थं परार्थं वा कार्यं कर्तुं न शक्नोति। अत एव छान्दोग्योपनिषदि लिखित वर्तते यत्—

"यदा मनुष्यो बलवान् भवति तदैव स उत्थातुं शक्नोति, उत्थाय परिचरितुं शक्नोति, परिचर्यया च सिद्धिं लभते। बलेनैव मनुष्यः श्रोता भवति, द्रष्टा भवति, मन्ता भवति, बोद्धा भवति, विज्ञाता भवति, कर्ता भवति। का कथा मानवानाम्? ब्रह्मण आरभ्य कीट-पतङ्ग-पिपीलिका-पर्यन्तं समस्ताऽपि सृष्टिः बलेनैव जीवमाना वर्तते। अत सर्वैरेव बलस्य उपासना कर्तव्या इति"।

एतेन स्पष्टतया ज्ञातुं शक्यते यत् बलस्य जीवने कियती उपयोगिता वर्तते। परमात्मनः प्राप्तिरपि बलेनैव सम्भवति इत्यपि उपनिषदः कथयन्ति—

"नायमात्मा बलहीनेन लभ्यः" इति।

एवञ्च शौच-स्नानादि नित्यकर्मण आरभ्य आत्मप्राप्ति पर्यन्त सर्वाणि अपि लघूनि महान्ति वा कर्माणि बलस्यैव साहाय्येन सिद्ध्यन्ति। यद्यपि कार्यसिद्धौ अन्यानि अपि कारणानि अपेक्षितानि भवन्ति परं सर्वप्रथम बलमेव आवश्यक भवति। अत एव भगवान् वेदव्यासो महाभारते वदति—"सर्वं बलवता साध्यम्" इति।

ये तु जना दुर्बला निर्बला वा भवन्ति तेषा जीवन महाक्लेशकर भवति। ते सर्वत्रैव पराभूता अपमानिता अनादृताश्च जायन्ते। न तान् तृणमदृशमपि जना मन्यन्ते। पदे पदे अन्येषा साहाय्य प्रतीक्षमाणाः ते दिवानिश दीन-हीना महता दुःखेन दिनानि अतिवाहयन्ति। दैवमपि तेषा साहाय्य न कुरुते। सुख सम्पत्तिश्च तेभ्यः शत क्रोशान् दूरे तिष्ठति। परिवारस्य समाजस्य च कृते ते भारभूता भवन्ति। अतः अस्माभिः तथा-

विधाः प्रयत्ना अनुष्ठेया येन समाजस्य सर्वेऽपि नरा नार्यश्च पूर्णरूपेण बलवन्तः स्वास्थ्यसम्पन्ना आत्मरक्षण-समर्थाश्च भवेयुः।

अस्मिन् समये सर्वाऽपेक्षया बलसञ्चयस्य महती आवश्यकता वर्तते। यतो हि अस्माकं बहवो विवेकशून्या मदोद्धता आततायिनः शत्रवः शस्त्रास्त्रैः, बलात्कारेण, छल कपटादिना, दुराचारेण सर्वैरेव च उपायैः अस्माकं देशस्य धर्मस्य भाषाया धर्मस्थानानां सम्पत्तेः सभ्यतायाश्च विलोपं कर्तुं प्रयत्नशीलाः सन्ति। प्रतिक्षणम् अवसरं प्रतीक्षन्ते। लब्धे च अवसरे त्वरितमेव आक्रमणं कुर्वन्ति। अस्यां सङ्कटापन्नायां परिस्थितौ यदि सर्वेऽपि वयं भारतीया दुर्बलतां दूरे परित्यज्य बलवन्तो न भविष्याम आत्मरक्षणाय च बद्धपरिकराः सुसन्नद्धाः सावधानाश्च न भवामः तावत् अस्माकं जीवनं धनं मर्यादा वा सर्वमपि अरक्षितमेव मन्तव्यम्। अत एव सम्प्रति बलसञ्चयस्य उपरि ध्यानदानस्य विशेषावश्यकता वर्तते।

बलवर्द्धनस्य अनेके उपाया सन्ति। यथा व्यायामः, मल्लयुद्धम्, प्राणायामः, खेलनं, कूर्दनं च। एतेषां प्रचारेण समाजे बलस्य वृद्धिः कर्तुं शक्यते। इदानीं ग्रामे ग्रामे व्यायामशालायाः स्थापना कर्तव्या। सर्वाणि च व्यायामोपयोगीनि दण्ड मुद्गरादीनि साधनानि एकत्र करणीयानि। तत्र ग्रामस्य सर्वेऽपि बालका युवानश्च आगत्य आवश्यकरूपेण यत्किञ्चिद् व्यायामादिकं कुर्युः। ग्रामेषु नगरेषु वा यत्र यत्र पाठशालाः चलन्ति तत्र तत्र व्यायामशाला अपि स्थापनीयाः येन विद्यार्थिनः प्रतिदिनं विद्योपार्जनेन सह बलसञ्चयमपि कर्तुं समर्था भवेयुः। इदानीं शत्रुभिः छिन्न भिन्न-कलेवरा भारतमाता न केवलं स्वपुत्रान् विद्यायामेव निपुणान् द्रष्टुं समीहते प्रत्युत शौर्ये वीर्ये पराक्रमे च प्रवलान्, वैरि निर्दलने निपुणान्, आत्म-संरक्षणे च समर्थान् द्रष्टुं समीहते। सम्प्रति स्वर्गादपि गरीयस्या वन्दनीयाया निजभारतमातुः प्रतिष्ठा-रक्षायै नहि दिवानिशं विलासमग्नाना प्रसाधन-

परायणानां सुकुमारशरीराणां युवकानां प्रयोजनं वर्तते अपि तु जितेन्द्रियाणां विलासविमुखानां बलिष्ठकलेवराणां विशालवक्षसां बलवतां युवकानां वर्तते। अतो विद्यालयेषु पठत्सु, ग्रामेषु वा गृहकर्म कुर्वत्सु, सर्वेष्वपि युवकेषु बल-वर्द्धनाय स्थले स्थले प्रतिपाठशालं च विशेषरूपेण व्यायामशालानां सञ्चालनाय समुद्योगो विधेयः सर्वे च नागरिका ग्रामीणा वा युवानो व्यायामं करणार्थं प्रेरणीयाः।

एवमेव विभिन्नप्रकाराणाम् आसनानाम् अभ्यासेन प्राणायामेन च शारीरिकी शक्तिः वर्द्धनीया। विशेषतो ये जनाः शिक्षिताः विद्वांसो वा सन्ति ते व्यायामशालायां गत्वा व्यायामकरणे लज्जन्ते। तेषां कृते अयमेव प्रकारो विशेषरूपेण उपकारको भवति। अन्ये च सूर्यनमस्कारादयो ये ये अनेके नवीनाः प्रकारा आविष्कृताः सन्ति व्यायामविद्याविशारदैः तेषामपि यथासम्भवम् उपयोगो विधेयः। इत्थमेव खेलनेन कूर्दनेन धावनेन उच्छलनादिना चापि अङ्ग प्रत्यङ्गानि बलवन्ति स्फूर्तिमन्ति च भवन्ति। एतदर्थं प्रत्येकं ग्रामे नगरे च स्वच्छं सुमनोहरं विशालं समतलं च क्रीडायाः प्राङ्गणम् अपेक्ष्यते। अत्रैव प्रतिदिनं सायङ्काले तत्रत्याः सर्वेऽपि बालका युवानश्च समागत्य केचन कन्दुकेन केचन पादकन्दुकेन अपरे गुलिका-दण्डाभ्यां कतिपये वीटया च खेलनं कुर्युः। केचन हनुमत्कूर्दनम् अङ्गदकूर्दनं गजग्राहञ्च विदधीरन्। अन्याश्च प्राचीनाः नवीना वा बलवर्द्धिकाः क्रीडाः कुर्युः। लघवश्च बालकाः तत्रैव पृथक् स्थाने स्वबलानुसारं क्रीडनं कूर्दनं धावनं प्लवनम् उत्प्लवनञ्च कुर्युः। सर्वत्रैव ईदृशी व्यवस्था विधेया।

पुरुषसमाजे इव महिलासमाजे अपि बलवर्द्धनस्य आवश्यकता वर्तते। यद्यपि ग्रामीणाः, तथापि साधारण-गृहस्थानां स्त्रियः प्रायशो गृहकार्यकरणेन पात्रमार्जनेन कुट्टनेन पेषणेन प्रस्फोटनेन इतस्ततो गमनाऽऽगमनाभ्यां धावनेन च बलवत्यः स्फूर्तिमत्यश्च भवन्ति परं धनिकानां स्त्रियस्तु नित्यकर्माणि विहाय सकलमपि समयं शयने उपवेशने

एव वा यापयन्ति । अतस्ता नितान्तमेव सुकुमारशरीरा भवन्ति । अपच या इदानीं कन्या विद्यालयेषु अध्ययनं कुर्वन्ते ता अपि बाहुल्येन विलास-परायणा भवन्ति सौकुमार्ये एव च आत्मनो गौरवं मन्यन्ते । परन्तु सम्प्रति दुराचारमये समये एतादृशीनां महिलानां मर्यादा-रक्षणं नितान्तम् असम्भवं वर्तते । अतः सम्प्रति सौकुमार्यप्रियताम् अपनीय स्त्रियोऽपि तथा शारीरिक शक्ति-सम्पन्ना भवेयुः यथा न कोऽपि तासां धर्षणम् अपहरणं बलात्कारं वा कर्तुं शक्नुयात् । यदि च कुर्यात् तदा तत्कालमेव ताडितो मारितश्च यमसदनं नीयेत । अतो धनिकैः जनैः तथा स्त्रियो साधनीया येन ता अपि गृहकार्यकरणे निःसङ्कोचं प्रवृत्ता भवेयुः । कन्यापाठशालासु च सञ्चालक महाशयैः काचन ईदृशी योजना विधेया यथा बालिका अपि स्वस्था बलिष्ठ कलेवराश्च भवेयुः । अस्मिन् विषये बडोदास्थ कन्यामहाविद्यालयादीनाम् अनुकरणं कर्तव्यम् ।

एवं प्रकारेण समाजस्य विभागद्वयेऽपि विद्याप्रचारेण सहैव यदा बल-वर्द्धनस्यापि कृते प्रचारो यत्नश्च भविष्यति, सर्वे च बालका,बालिका, नरा नार्यश्च विद्यया बलेन च सममेव सुसम्पन्नाः भविष्यन्ति तदैव आत्मनः समाजस्य राष्ट्रस्य वा कल्याणं भविता ।

---

# देश-भ्रमणम् ।

ज्ञानोपार्जनस्य यानि अनेकानि साधनानि सन्ति तेषु देशभ्रमणम् अपि एकं मुख्यं साधनं मन्यते । पुस्तकानां पठनात् यत् ज्ञानं न जायते तत् देशभ्रमणात् भवति । पुस्तकेषु वयं विविधदेशानां नानाविध-नद-नदीनां विभिन्नानां गिरि-पर्वतानां च पाठं पठामः । परन्तु यावत् तेषां

वस्तूना ऐतिहासिकाना अनेकेषा दर्शनीयस्थलाना च साक्षात् निरीक्षण न भवति तावत् न तेषा यथार्थज्ञान जायते नाऽपि हृदयस्य परितोष एव भवति। इदानीं संसारे कतिपयवस्तूनि सर्वाधिकानि आश्चर्य-जनकानि मन्यन्ते। यथा—चीनदेशस्य भित्तिः, आगरानगरस्य ताजमहलनामक भवनमित्यादि। एतेषा परिचय वय पुस्तकेषु पठाम चित्राणि च अवलोकयाम.। पर तेषा समीपे गत्वा सम्यक् अवलोकनेन यथा वास्तविक ज्ञान सन्तोषश्च भविष्यति न तथा पुस्तकशतानामपि अध्ययनेन भवितुमर्हति। अतो देशभ्रमण प्रशसन्ति कुशलाः।

अन्यच्च देशभ्रमणात् कूपमण्डूकता नश्यति, बुद्धेश्च विकाशो जायते। ये जनाः प्रायेण एकस्मिन् स्थाने निवसन्ति, न कदाचित् इतस्ततो गृहात् ग्रामाद्वा वहिः निर्गच्छन्ति ते कूपमण्डूक सदृशाः सङ्कुचितबुद्धयो भवन्ति। ये मण्डूका' सदैव कूपेषु निवसन्ति न कदाचित् वहि' नद सरादिषु गच्छन्ति ते कूपमेव महत् मन्यन्ते। तमेव सर्वतोऽधिक विशाल गभीरञ्च अवगच्छन्ति। इद न जानन्ति यत् कूपादपि विशाला जलाशया' सन्ति इति। तथैव ये जना वहिः विभिन्नस्थानेषु भ्रमण न कुर्वन्ति तेषामपि कूपमण्डूकस्य इव सङ्कुचिता बुद्धिर्भवति। पर ते एव यदा वहिर्गच्छन्ति, विविधदेशेषु भ्रमन्ति, नानाविधानि नगराणि अवलोकयन्ति, विविधै पुरुषैः सह वार्तालाप कुर्वन्ति, अत्यद्भुतानि वस्तूनि साक्षात्कुर्वन्ति, भिन्न भिन्नान् आचारान्, भिन्नभिन्नान् व्यवहारान्, नानाविधा वेषभूषा, विचित्रविचित्राणि रूपाणि, विविधा भाषा', अदृष्टानि अश्रुतानि अकल्पितानि च जीवजन्तूना स्वरूपाणि निरीक्षन्ते तदा तेषा मोहो विनश्यति, कूपमण्डूकता पलायते, क्षुद्रता अपयाति, बुद्धिश्च महान्त विकास प्राप्नोति, महाशयश्च अनुभवो जायते। अतो यथासम्भव यथाशक्ति यथासमयञ्च सर्वैरेव देशभ्रमण कर्तव्यम्।

भ्रमणेनैव अस्माक पवित्राणा तीर्थानामपि दर्शन भवति। तद्दर्शनेन च धर्मे बुद्धिर्जायते, अधर्मबुद्धि' नश्यति, मनसि पवित्रता उत्पद्यते,

साधनानि सन्ति । पर तस्य स्वास्थ्य समीचीन नास्ति । अस्वस्थो वर्तते । रोगशय्याया पतितोऽस्ति । तदा किं स उपरि लिखितेभ्य साधनेभ्य सुख भोक्तु लभते ? नैव, कदापि नैव । न स भोक्तु शक्नोति । न च दधिदुग्धादिकमेव सेवितु प्रभवति । घृतस्य तु स्पर्शोऽपि तस्मै हानिकरः । न च स यानेषु आरुह्य विहारमेव कर्तुं पारयति न च सेवका एव तस्य यथावत् सेवा कर्तुमर्हन्ति । अत अस्वस्थ पुरुष स्वय तु किमपि सुखसाधनम् उपार्जितु प्रभवत्येव नहि अपितु पूर्वोपार्जितेभ्योऽपि साधनेभ्यो वञ्चितस्तिष्ठति । अत अन्यधनाऽपेक्षया अस्यैव धनस्य उपार्जन सरक्षणञ्च परमावश्यक वर्तते इति सिद्ध भवति । अतएव च कथ स्वास्थ्यस्य हानिर्जायते कथञ्च तस्य रक्षा कर्तुं शक्यते इत्यस्यैव विषयस्य उपरि सर्वप्रथम ध्यानदानाय उपदिशन्ति आयुर्वेदाचार्या । महाकविः कालिदासोऽपि कुमारसम्भवे एकत्र कथयति—

शरीरमाद्यं खलु धर्मसाधनम्, इति ।

यदि मातरि पितरि कश्चिद् दोषो रोगो वा न भवति तर्हि प्रकृत्येव स्वस्था जना उत्पद्यन्ते । परन्तु विपरीतेन आहारविहारादिना जनाः स्वस्थमपि शरीर स्वयमेव अस्वस्थ कुर्वन्ति । शयनस्य जागरणस्य,भोजनस्य पानस्य, उत्थानस्य उपवेशनस्य, भ्रमणस्य विश्रामस्य च नियमानां प्रायेण नरा उल्लघनं कुर्वन्ति अतस्तेषा स्वास्थ्य विनष्ट भवति । कदा शयितव्यम् कदा जागरितव्यम् , किं भोक्तव्यं किं न भोक्तव्यम् , किं पातव्यम् किं न पातव्यम्, कस्याम् ऋतौ कीदृशा आहार-विहारा हितकरा भवन्ति कीदृशाश्च अहितकरा इत्यादीना ते विचार न कुर्वन्ति । उपदिश्यमाना अपि ध्यान न ददते । यथेच्छ शेरते यथेच्छ च जाग्रति, यथाकाम च भुञ्जते पिबन्ति च । विपरीत वा सर्वमपि कार्यमनुतिष्ठन्ति । अस्मादेव कारणात् अस्माक देशस्य बहवो जना अल्पीयसि एव वयसि स्वास्थ्यहीना जायन्ते भारभूत निरर्थक च जीवन यापयन्ति ।

विशेषतो विद्यार्थिभिः नवयुवकैश्च स्वास्थ्यरक्षाया उपरि पूर्णरूपेण ध्यानं दातव्यम्। स्वास्थ्य-नियमानुसारमेव सदा वर्तितव्यम्। ब्राह्मे एव मुहूर्ते अहरहो[1] जागरितव्यम् रात्रौ च यथासमयमेव शयनं कर्तव्यम्। देश-कालौ विचार्यैव आहार विहारादीनां व्यवस्था विधेया। शरीरस्य वस्त्राणां स्थानस्य च स्वच्छतायां सदा सावधानतया स्थातव्यम्। प्रतिदिनञ्च व्यायामः कर्तव्यः। नहि मलिने रोगदूषिते च स्थाने कदापि गन्तव्यम्। न चापि ईदृशैः पुरुषैः सह सङ्गो विधेयः। सायं प्रातश्च यथासम्भवं प्रतिदिवसं स्वच्छ-वायु सेवनं कर्तव्यम्। न च काचित् मनसि दीर्घचिन्ता करणीया। प्रसन्नहृदयेन च सर्वदा भवितव्यम्। नहि अनिष्टा वार्ता चेतसि चिन्तनीया। नापि निन्दिते पथि पादौ धारणीयौ। न च कस्मिंश्चित् अणीयसि[2] अपि रोगे समुत्पन्ने ततः प्रमदितव्यम्। त्वरितमेव च तस्य प्रतीकाराय प्रयतितव्यम्। एवंविधैः अन्यैश्चैव आयुर्वेदोपदिष्टैः नियमैः यदा वयं स्वकीयं स्वास्थ्यं रक्षिष्यामः तदैव सर्वमपि कार्यं साधयितुं सुखं च समासादयितुं समर्था भविष्यामो नाऽन्यथा। अत एव आचार्यवर्याः प्राहुः—

"धर्मार्थकाममोक्षाणाम् आरोग्यं मूलमुत्तमम्" इति।

---

## स्वच्छता।

स्वास्थ्य रक्षायै ये ये उपाया निर्दिष्टाः सन्ति तेषु स्वच्छता अपि एकः परमावश्यकः उपायो वर्तते। पूर्णरूपेण स्वस्थोऽपि मानवो यदि

---

१—प्रतिदिन। २—बहुत छोटा।

स्वच्छतायां उपरि ध्यानं न दत्वा मलिनानि वस्त्राणि परिधत्ते,[1] मलिनायां शय्यायां शेते, मलिने गृहे निवसति, स्वकीयं शरीरं च मलिनं रक्षति तर्हि तस्यापि स्वास्थ्यं नश्यति। का पुनः वार्ता अस्वस्थानां साधारणस्वस्थानां वा जनानाम्? अतः सर्वैरेव जनैः देहस्य वस्त्राणां वासस्थानस्य पार्श्वभूमेः शय्यादीनाञ्च स्वच्छतायां उपरि पूर्णतया ध्यानं देयम्। एषु वस्तुषु सम्यक् स्वच्छेषु साधु परिष्कृतेषु च रोगाणां नाशः, वायोः शुद्धिः, चक्षुषोराह्लादः, मनसः प्रसन्नता, आरोग्य-वृद्धिश्चेति अनेके लाभा भवन्ति।

परन्तु इदं जानन्तोऽपि जना बहुधा दुरभ्यासेन आलस्येन च स्वच्छतायां उपरि विशेषं ध्यानं न ददते। बहूनां जन्मकालत एव मलिनवस्त्रधारणस्य, मलिने स्थाने निवासस्य, सप्ताहे एकवारं स्नानस्य, मलिनातिमलिनायां शय्यायां शयनस्य च अभ्यासो वर्तते। तादृशे एव परिवारे तेषां जन्म अभूत्। अतो जन्मकालीनो दुरभ्यासस्तेषां झटिति न दूरीभवति। यथा कर्दमस्य[2] कीटाः कर्दमे एव सुखमनुभवन्ति तथैव मालिन्ये एव तेषां मनो रमते। नहि ते स्वच्छतायै विशेषपरिश्रमं कर्तुमीहन्ते। अपरे च केचन आलस्यवशादेव स्वच्छतायै प्रयत्नशीला न भवन्ति। ते मनसा स्वच्छतां रोचयन्तोऽपि[3] आलस्यं वशीभूताः तदर्थं प्रयत्नं न कुर्वन्ति, मालिन्यमये एव च वातावरणे जीवनं यापयन्ति। ईदृशा जनाः स्वकीयं स्वास्थ्यं नाशयन्तः परेषां पार्श्ववर्तिनामपि स्वास्थ्यहानेः कारणीभूता भवन्ति, परम्परया समाजस्य च। ईदृशा अपि जना यथा मलिनताप्रियताम् अपनीय स्वच्छतासम्पादने दत्तावधाना भवेयुः तथा अस्माभिः प्रयतनीयम्।

स्वच्छताया अभावो मलिनतायाः सत्ता[4] च अनेकप्रकारेण

---

१—पहनता है। २—कीचड़ का। ३—पसन्द करते हुए भी। ४—रहना, बने रहना।

अस्माकम् अपकारं करोति । देहे वस्त्रे वासस्थाने वा यत्र यत्र मालिन्यं भवति तत्र तत्र रोगाणां बीजाणवः उत्पद्यन्ते । ते च बीजाणवः अस्माकं शरीरेषु आक्रमणं कुर्वन्ति । आक्रम्य च नानाविधान् रोगान् उत्पादयन्ति । तेन च वयम् अकाले एव काल-कवलिता भवाम[1] ।

अन्यच्च, न केवलम् इयम् अस्वच्छतापिशाचिनी देहस्यैव स्वास्थ्यहानिं करोति अपितु मनसोऽपि । देहेन सह मनसो घनिष्ठः सम्बन्धो वर्तते । यदा शरीरं स्वच्छं पवित्रं सुपरिष्कृतञ्च तिष्ठति तदैव मनोऽपि सुस्थं सुप्रसन्नं च जायते । प्रसन्नेनैव मनसा सर्वाणि कार्याणि सुचारुरूपेण कर्तुं शक्यन्ते । यदा च देहादिकं मलिनं भवति तदा मनसि अपि प्रसन्नता न समुदेति न च किमपि कार्यं सम्यक्तरत्वेन सम्पद्यते । एतदतिरिक्तम्-मलिनवाससां[५] मलिनदेहानां च जनानां समीपे न केचन गन्तुमिच्छन्ति, न तैः सह उपवेष्टुमीहन्ते[६] नापि वार्तालापमेव कर्तुमभिलषन्ति । न केवलं परकीयाः प्रत्युत स्वकीया अपि बन्धुबान्धवाः तैः सह उपवेशने भोजनपानादौ च महतीं घृणां प्रकटीकुर्वन्ति ।

इमानि खलु मलिनतायाः दूषणानि सन्ति । अतो देहस्य,वेषभूषायाः, वासभूमेः,शय्यायाः,अन्येषां च पार्श्ववर्तिनां वस्तूनां स्वच्छतायै परिष्काराय च प्रत्येकं पुरुषेण यथासम्भवं पूर्णयत्नो विधेयः । प्रतिदिनं शौचं, दन्तधावनं, हस्तपादादि प्रक्षालनम्, स्नानं, वस्त्रपरिष्कारः, केशप्रसाधनम्, गृहमार्जनम् समये समये केशकर्तनं नखकृन्तनञ्च सम्यक् प्रकारेण कर्तव्यम् । एतेन स्वास्थ्य-रक्षणे साहाय्यं मिलिष्यति, सहैव सर्वत्र अप्रतिहतः प्रवेशः, सभ्यसमाजे समादरः, सत्पुरुषेषु गणना च भविष्यति ।

इयं बाह्यस्वच्छतायाः वार्ता अभूत् । परं न केवलं बाह्यस्वच्छतया एव कश्चित् स्वस्थो भवितुमर्हति नापि सभ्यसमाजे समादरमेव लब्धुं शक्नोति । अतः एतदर्थम् आभ्यन्तरशुद्धेरपि महती आवश्यकता वर्तते ।

---

[५]—गन्दा कपड़ा पहनने वालों का। [६]—बैठना चाहते हैं।

यदि आभ्यन्तरे पवित्रता नास्ति, भाव शुद्धिः नास्ति, मनसि विकृता एव भावा वियन्ते, हृदयं दूषितं वर्तते तर्हि बाह्यपरिष्कारस्य किञ्चित् मूल्यं नास्ति। तत् खलु आडम्बरमात्रं भवति, वञ्चनाया वा साधनम्।

अस्मत्-समाजे अनेके एवंविधा एव पुरुषाः सन्ति। ते प्रतिदिनं स्वयमेव स्वश्मश्रूणि[७] मुण्डयन्ति। दिने वारत्रयं स्नानं कुर्वन्ति। अहरहः वस्त्राणि क्षालयन्ति। अनेकैः साधनैः शरीरं मार्जयन्ति[८]। यदा यदा बहिर्गच्छन्ति तदा तदा कङ्कतिकाभिः[९] केशान् प्रसाधयन्ति। अतिशुभ्राणि वसनानि धारयन्ति। उपानहौ सततं प्रोञ्छनादिना निर्मले रक्षन्ति। वासस्थानं च तेषां सर्वथा सुमार्जितं सुपरिष्कृतं नानाविधैश्च रमणीयैर्वस्तुभिः सुसज्जितं तिष्ठति। एवं ते बाह्यपरिष्कारे आवश्यकताया अपि कदाचित् अधिकं ध्यानं ददते। परन्तु आभ्यन्तरो भागस्तेषां महामलिनो भवति। न ते असत्यवदनात् विरमन्ते। न उत्कोचग्रहणात्[१०] सङ्कुचन्ति। न परप्रतारणं[११] दूष्यं मन्यन्ते। न पर-दार-संसर्गात्[१२] लज्जन्ते। न कार्यसिद्धये उचितमनुचितं वा विचारयन्ति। परं किं वेषपरिष्कारेणैव एतादृशा जनाः सम्मानं प्राप्तुमर्हन्ति? सामाजिकसमादरस्य वा अधिकारिणो भवितुं शक्नुवन्ति? मनसि विविधान् दूषितान् विचारान् बिभ्रतः[१३] आत्मानं सर्वथा स्वस्थं रक्षितुं क्षमन्ते? समाजस्य कृते च ते आदर्शपुरुषा भवितुं शक्नुवन्ति? नैव। एतदर्थम् उभयत्र[१४] परिष्कारस्य आवश्यकता वर्तते। यथा बहिः तथैव आभ्यन्तरेऽपि। अस्माकं शास्त्रेषु तु बाह्यशुद्धेः अपेक्षया आभ्यन्तरशुद्धेः एव अधिकं महत्त्वं वर्णितं वर्तते। परं सम्प्रति तद्विपरीतमेव आचरणं दृश्यते। इदानीं बाह्यवेषभूषादि-परिष्कार एव सभ्यतायाः परिचायकः मन्यते। आभ्यन्तरं

---

७—दाढ़ी। ८—साफ करते हैं। ९—कङ्घियों से। १०—घूस लेने से। ११—दूसरे को ठगना। १२—दूसरे की स्त्री के संसर्ग से। १३—धारण करते हुए। १४—दोनों जगह।

यथा तथा वा अस्तु । परं नहि अनेन एकदेशिना परिष्कारेण व्यक्तेः समाजस्य वा लाभो भवितुमर्हति । अतः अस्माभिः उभयविधस्यापि परिष्कारस्य कृते प्रयतितव्यमिति ।

---

# समयस्य सदुपयोगः ।

समयस्य सदुपयोगः मानव-जीवनस्य एकं परमं हितकारि कर्तव्यं वर्तते । यद्यपि सदुपयोगः सर्वेषामपि वस्तूनां कर्तव्यः । नहि किमपि वस्तु दुरुपयोगाय भगवता निर्मितम् । तुच्छतमस्यापि कस्यचिद् वस्तुनो यदि कश्चिद् दुर्व्यवहारं करोति तर्हि स, न तेन सह, अपि तु भगवता सह दुर्व्यवहारं करोति । अतः स्वकल्याणं वाञ्छता पुरुषेण सर्वेषामेव पदार्थानां सदुपयोगः सद्व्यवहारश्च विधेयः । परं तथापि समयस्य सदुपयोगाय विशेषरूपेण ध्यानदानम् आवश्यकं भवति । इदं तत्र कारणम् । समयो हि अन्यवस्तूनाम् अपेक्षया अधिकं महत्त्वपूर्णम् अधिकं च मूल्यवद् वस्तु वर्तते । अन्यानि वस्तूनि विनष्टानि पुनरपि लब्धुं शक्यन्ते । परं समयो विनष्टो न केनापि उपायेन पुनः परावर्तयितुं शक्यते । यस्य आयुषो यावान् अंशो निरर्थकं गतः स गत एव । अतस्तथा प्रयतितव्यं पुरुषेण यथा एकस्यापि क्षणस्य दुरुपयोगो न भवेत् । अथ च सर्वोऽपि समयः सम्यग् उपयुक्तः समुचितेन कार्येण च अतिवाहितः[1] स्यात् ।

दौर्भाग्यवशात् इदं सर्वं जानन्तः अपि प्रायेण समयस्य द्विधा दुरुपयोगं जनाः कुर्वन्ति । व्यर्थयापनेन[2] अकार्याचरणेन च । अनेके कार्यसम्पादने समर्था अपि निरर्थकं समयं यापयन्ति । इतो भ्रमन्ति ततो भ्रमन्ति । अप्रयोजनं गृहे गृहे आहिण्डन्ति । न ते स्वार्थाय एव किञ्चित्

---

१—बिताया गया । २—बेकार बिताने से ।

जीवनस्य उद्देश्य वर्तते। देव दुर्लभमिद मानव-शरीर लब्ध्वापि यो न धर्ममाचरति, न धनम् उपार्जयति, न विषयोपभोग कुरुते, न वा मुक्त्यै एव प्रयत्नमनुतिष्ठति स निरर्थकमेव जीवति। तस्य जीवनस्य नापि आवश्यकता वर्तते न च अधिकार एव। न च इय कर्मभूमिरेव एतादृशाना निष्क्रियाणा भार वोढुमिच्छति। वेदा अपि उपदिशन्ति—

"कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः"

[ ईशोपनिषद्, २ ]

अर्थात् यो हि कर्माणि कर्तुमिच्छति तेनैव जीवितव्य मनु निष्क्रियेण। अतः सामर्थ्ये सति सर्वैरेव शरीरधारिभिः सत्कार्य-सम्पादनैरेव समयो यापनीयः। न तु कदाचित् निरर्थकः कालो नेयो न वा तस्य दुरुपयोग एव कर्तव्यः। अय हि समयस्य सदुपयोगो जीवन-सफलताया प्रथम सोपानम्, सर्वविध समुन्नते मूलमन्त्र, आत्म-निर्माणस्य च परम साधनम् अस्ति। अत एव अस्मिन् विषये सर्वेणापि सावधानतया वर्तितव्यम्।

प्रकृतिरपि कार्य-परायणताया एव उपदेश ददाति। प्रकृतौ यावन्त पदार्थाः सृष्टाः सन्ति ते सर्वेऽपि अहोरात्र कार्य-सलग्ना एव दृश्यन्ते। सूर्य चन्द्राभ्याम् आरभ्य कीट-पतङ्ग-पिपीलिका[१२]पर्यन्त सर्वऽपि स्व स्व-व्यापारे व्यापृता[१३] विलोक्यन्ते। अतः प्रकृत्या अपि इयमेव शिक्षा मिलति यत् नहि केनापि समयस्य अनुपयोगः कर्तव्य इति।

अन्यच्च। ये किमपि कार्य कर्तुं न वाञ्छन्ति परिश्रमाद्वा आत्मान चोरयन्ति तेषा क्वचित् निर्वाहोऽपि दुर्लभ एव भवति। नहि ईदृशान् जनान् केऽपि रोचयन्ति[१४]। न वा कश्चिद् आश्रयमेव दातुमिच्छति। स यत्रैव गच्छति तत एव वहिष्क्रियते सर्वत्र च तिरस्कृतो भवति। किमधिक, मातापितरौ अपि एतादृश तनय न अभिनन्दन्ति का पुनरन्येषा

१२—चींटी १३—सलग्न। १४—पसन्द करते हैं।

सम्मुखमन्वमाना वार्ता । एतद्विपरीतम्—ये जनाः कदापि समयस्य दुरुपयोगं न कुर्वन्ति, सदैव कार्यसंलग्नाः तिष्ठन्ति न च परिश्रमाद् आत्मानं गोपयन्ति[15] तेषां सुखेनैव निर्वाहो भवति । ते यत्रैव गच्छन्ति तत्रैव आदरं लभन्ते । गृहे बहिश्च सर्वत्रैव समानरूपेण अभिनन्द्यन्ते । सर्वे एव तेषां सहयोगमिच्छन्ति । ते च न केवलं स्वस्यैव प्रत्युत अन्येषामपि निर्वाहं कारयन्ति । तादृशा एव च कर्मवीरा जनाः समाजे सर्वत्र समाद्रियन्ते श्रेष्ठपदं च लभन्ते ।

अवलोकयन्तु तावत् महापुरुषाणां जीवनचरितानि । अद्यावधि ये ये महापुरुषा जगति जन्म गृहीतवन्तः, इदानीमपि वा यावन्तो महापुरुषा देशविदेशेषु विद्यमानाः सन्ति तेषां जीवनचरित्रस्य अध्ययनेन ज्ञायते यत् ते बाल्यकालादेव अहोरात्रं कर्मपरायणा आसन्, एकमपि क्षणं नहि निरर्थकं नीतवन्तः । कर्ममयं पुरुषार्थमयम् उत्साहमयम् अध्यवसायमयञ्च तेषां जीवनम् आसीत् । "कार्यं वा साधयामि शरीरं वा पातयामि" इत्येव च तेषां लक्ष्यं बभूव । यदेव कार्यं ते आरेभिरे[16] तस्यैव पूरणे सम्पूर्णमपि स्वकीयं समयं यापयामासुः[17] । इदमेव कारणं मन्ये यत् तेषां अद्यापि गृहे गृहे गौरवगाथा गीयते आदर्शपुरुषाश्च ते मन्यन्ते ।

विचारयन्तु । यदि भगवान् शङ्कराचार्यः अहोरात्रं परिश्रमं न अकरिष्यत्, समस्तेऽपि भारते दिवानिशं न अभ्रमिष्यत्, स्थले स्थले विरोधिनां सिद्धान्तान् न अखण्डयिष्यत्, तर्हि किं पुनः भारते वैदिकधर्मस्य प्रचारः अभविष्यत् ? अथवा त्यज्यताम् इयं पुरातनी वार्ता । नवीनम् उदाहरणं गृह्यताम् । अस्मिन् एव समये गान्धिमहोदयः अन्ये वा भारतीया नेतारो यदि अहर्निशं न अयतिष्यन्त,[18] महतो महत् कष्टं न असहिष्यन्त

---

१५—बचाते हैं, छिपाते हैं । १६—आरंभ किया । १७—बिताया । १८—प्रयत्न करते ।

परिश्रमात् वा भयम् व्यधास्यन्त [१६] तदा किं गौराङ्गा इतः अपलायिष्यन्त भारतीयाश्च स्वराज्यम् अलप्स्यन्त [२०]।

निरन्तर समय सदुपयोगस्य एव एतत् सर्वं फल वर्तते। अतः अस्माभिरपि आलस्य विहाय सर्वदैव समयस्य सदुपयोगः कर्त्तव्य न तु कदाचित् एक क्षणमपि वृथा यापनीयम् [२१]। यथोक्त प्राचीनाचार्यैः —

न कार्यकालमतिपातयेत्।

—चरकसंहिता

न कालमति वर्तन्ते महान्तः स्वेषु कर्मसु।

—योगवाशिष्ठ

---

# एकता।

सांसारिकजीवनस्य सम्यगरूपेण निर्वाहाय समाजे परस्परम् एकताया महती आवश्यकता भवति। गृहे परिवारे समाजे देशे वा यदि परस्परम् एकता न स्यात् तर्हि क्षणमात्रमपि जीवन सुखेन चलितु नार्हति। परिवारस्यैव उदाहरणं गृह्यताम्। यदि कस्मिंश्चित् परिवारे सर्वे एव जना यशस्विनो बुद्धिमन्त कार्यक्षमाश्च सन्ति पर तेषु परस्परम् एकता नास्ति, ऐकमत्य नास्ति, सर्वेषामेव भिन्ना मतयो भिन्नाश्च विचाराः सन्ति, पदे पदे विवदन्ते, मुहुर्मुहुश्च कलहायन्ते, तदा ते कथमपि एकत्र सुखेन निवसितु न शक्नुवन्ति। एवमेव यस्य समाजस्य जाते देशस्य वा पुरुषेषु ऐकमत्य न भवति तस्य उन्नति दूरे तिष्ठतु शीघ्रमेव विनाशः सम्पद्यते। अत एव वेदाना मानवसमाज प्रति इयम् आज्ञा वर्तते यत्—

सगच्छध्व सवदध्व स वो मनांसि जानताम्, इति।

[ ऋग्वेद, १० १९१, २ ]

---

१९—करते। २०—पाते। २१—बिताना चाहिये।

एकता समाजस्य बलं वर्द्धयति, शत्रुभ्यो रक्षां करोति, प्रभावं विस्तारयति, विपदो निवारयति, सुखसाधनानि च समुत्पादयति। नहि पृथक् पृथक् अवस्थिता व्यक्तयः किमपि कार्यं साधयितुं शक्नुवन्ति प्रत्युत परस्परं सम्मिलिता एव। सम्मिलितानि एव तृणानि रज्जुरूपं[1] धृत्वा गजराजस्यापि बन्धनं कर्तुं प्रभवन्ति। सम्मिलिताभिरेव इष्टिकाभिः[2] महान्ति महान्ति भवनानि निर्मीयन्ते। परस्परं सम्मिलितान्येव इन्धनानि[3] ज्वलन्ति कार्यं च साधयन्ति। अन्यथा तु धूमायन्ते एव। एवमेव परस्परं सम्मिलिता लघीयांसोऽपि जनाः सङ्घबलेन महान्ति अपि कार्याणि साधयितुं क्षमन्ते। असम्मिलितास्तु महान्तोऽपि वैमत्यवशात् न किमपि कर्तुं पारयन्ति। अतः अस्माभिरपि ऐकमत्यस्य सङ्घटनस्य च कृते स्वसमाजे पूर्णरूपेण प्रयासः कर्तव्यो येन अस्माकं सर्वाणि कार्याणि सिध्येरन् जगतीतले च गौरवं वर्द्धेत।

यद्यपि सर्वैः प्राचीनकालादेव एकताया आवश्यकता अनुभूयते स्म, परन्तु अस्मिन् युगे तु तस्या ततोऽपि विशेषरूपेण आवश्यकता वर्तते। पूर्वकाले तु समाजे एकैके ईदृशा अपि असाधारण-शक्तिसम्पन्ना महापुरुषा बभूवुः ये एकाकिनोऽपि स्व-प्रभाव-बलात् महान्ति महान्ति कार्याणि साधयितुं क्षमन्ते स्म। परं सम्प्रति तादृशाः पुरुषा न उपलभ्यन्ते[4]। इदानीं तु लघु महत् वा कार्यं ऐक्यबलेनैव सम्पादयितुं शक्यते। अत एव त्रिकालदर्शिभिः अस्माकं महर्षिभिः शास्त्रेषु इयं भविष्यद्वाणी लिखिता वर्तते यत्—

सङ्घे शक्तिः कलौ युगे, इति।

परस्परम् ऐकमत्येन कियन्तो लाभा भवन्ति, अनैक्येन कियन्त्यो हानयः इत्यस्य अनेकानि उदाहरणानि संसारस्य इतिहासग्रन्थेषु अवलोक्यन्ते। इदानीमपि वयं सङ्घटनस्य असङ्घटनस्य च लाभाऽलाभौ निरन्तरं पश्याम एव। एतत्सर्वं विलोक्य न केनापि बुद्धिमता पुरुषेण

---

१-रस्सी का रूप। २-ईंटों से। ३-लकड़ियाँ ४—पाये जाते हैं।

एकताया महत्त्वम् अस्वीकर्तुं शक्यते । अत एव सर्वेऽपि विभिन्न देश-
वासिनो मनुजाः स्व-स्व-देशे ऐक्य-स्थापनाय महान्तं प्रयासं कुर्वन्तो दृष्टि-
पथम् आयान्ति । परं महतो दुःखस्याऽयं विषयो वर्तते यत् अस्माकं
देशे हिन्दुसमाजे वा एकताया यादृशी आवश्यकता वर्तते तादृशी नास्ति ।
धर्मे समाजे राजनीतौ वा सर्वत्रैव मतभेदस्य साम्राज्यं वर्तते । धार्मिके
जगति शताधिकाः सम्प्रदायाः सन्ति । तेषाम् आचार्याः, ग्रन्थाः,
विचाराः, व्यवहाराः, वेषाः, रीतयो, नीतयः, स्तुतयः, प्रमाणाश्च सर्वेऽपि
परस्परं विलक्षणाः सन्ति । परस्परम् ऐकमत्यमपि नास्ति । सामाजिकेऽपि
क्षेत्रे परस्परविरोधिनो विचाराः सर्वदैव सभा सम्मेलनादिषु पत्र पत्रिकादिषु
वा सर्वदा दृष्टिगोचरा भवन्ति एव । राजनीतिर्मतभेदम् आदाय
देशस्य विभिन्नाः संस्थाः प्रतिदिनं परस्परं कलहायमानाः सङ्घर्षप्रारब्धाश्च
सन्तीति देशकालविदाम् अविदितं नास्ति । मुण्डे-मुण्डे विभिन्ना मतयः
सन्ति । अन्यविषयाणां वार्ता त्यज्यताम् । भोजन विषये एव अस्माकं
समाजे अनेके परस्परविरुद्धा विचाराः प्रतिदिनं प्रकटीभवन्ति । केचन
स्वकृतमेव भोजनम् उचितं मन्यन्ते, केचन परकृतमपि । केचन स्वसम्ब-
न्धिनामेव गृहे ओदनादिकं भक्षयन्ति नाऽन्यत्र । केचन अन्यथापि कुर्वन्ति
परं स्वजातेरेव, नाऽन्यजातेः । केचन पूर्वतनस्य अन्नस्य सर्वथैव भोजनं
समर्थयन्ति । अन्ये तत्र इदं संशोधनम् उपस्थापयन्ति यत् शष्कुली तु
अशनीया[5] परं शाकं लवणवर्जितमेव खादनम् । केचन धार्मिकम्मन्या
जनास्तु शष्कुली अपि यदि जलस्पर्श रहिता भवेत् तदैव खाद्या इति
सिद्धान्तयन्ति । केचन दूरादपि आनीतं भोज्यं भोक्तुमर्हन्ति परं स्वनिलये
पाकालये एव गत्वा भोक्तुं शक्नुवन्ति न अन्यत्र । केचन वस्त्र परिधा-
याऽपि भोजने दोषं न मन्यन्ते । अपरे तु तथा करणे महतीं घृणां प्रकटी-
कुर्वन्ति । केचन धूमशकटेषु[6] दिने वारत्रयं भुञ्जते । केचन फलान्येव
खादन्ति न तु अन्नम् । केचन च निराहारा एव तिष्ठन्ति । निदर्शन-

---

५—खानी चाहिये । ६—रेलगाड़ियों में ।

मेतत् । एवमेव अनेके भिन्न भिन्ना विचाराः सन्ति । तेषां सर्वेषां यदि गणना क्रियेत तर्हि एकं स्थूलाकारं पुस्तकमेव निर्मितं स्यात् ।

एतादृश विचार वैषम्यातिरिक्तम् ईर्ष्याद्वेष-वशात् गृहे गृहे, प्रतिवेशे प्रतिवेशे, ग्रामे ग्रामे च यत् परस्पर वैमत्यम्, अनैक्यम्, असंघटनम्, विरोधो, वैरम्, अविश्वासश्च वर्तते तत्तु तु पृथगेव वर्तते । ग्रामे ग्रामे दलबन्ध-परम्परा चलति । अतो न सर्वे ग्रामीणाः क्वचित् एकत्र स्नेहात् सम्मिलिता भवन्ति, न कस्मिंश्चित् विषये ऐकमत्यं भजन्ते, न च एक-मुखेन सर्वेषां हिताय किमपि कार्यं कर्तुं प्रभवन्ति । इदमेव कारणं वर्तते यद् वयं बहवो भूत्वाऽपि न किमपि कर्तुं पारयामः ।

यद्यपि त्रिगुणात्मकोऽयं संसारः । विभिन्नाश्च रुचयो मानवानाम् । यत् एकस्मै रोचते तदेव अन्यस्मै अपि रोचताम्[७] इति सर्वथा स्वभाव-विपरीता वार्ता वर्तते । अतः सर्वेषु विषयेषु सर्वथा ऐकमत्यं तु दुर्लभमेव । परं ये ये विषयाः समाजस्य जातेः देशस्य वा हितकारका उन्नायका वर्द्धकाश्च सन्ति तेषु एकता तु अवश्यमेव अपेक्ष्यते । अथ च ग्रामेषु मिथ्याऽभिमानेन, पक्षपातेन, ईर्ष्याद्वेषाभ्यां, मूर्खतया वा ये विरोधिनो भावाः प्रचलन्ति तेषां विनाशः तत्स्थाने च परस्परम् एकतायाः सहयोग-स्य सहकारितायाः स्नेहस्य च प्रसारः परमावश्यको वर्तते । एकताया अभावः कियतीं हानिं समाचरति करोति इति विषये महाभारतस्य द्वौ श्लोकौ कदापि न विस्मरणीयौ—

न वै भिन्ना[८] जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्नाः प्रशमं रोचयन्ति ।
न वै तेषां स्वदते[९] पथ्यमुक्तं योगक्षेमं कल्पते नैव तेषाम्,
भिन्नानां वै मनुजेन्द्र परायणं[१०] न विद्यते किञ्चिदन्यद् विनाशात् ।
[उद्योग, ३६, ५६-५७]

---

७—अच्छा लगे । ८—अलग अलग रहने वाले, फूट वाले ।
९—अच्छा लगता है । १०—परिणाम, अन्तिम गति ।

अतस्तथा अस्माभिः प्रयत्नः कर्तव्यो यथा मतभेदो विनश्येत् सर्वत्र च एकतायाः प्रचारो वृद्धिश्च जायेत यस्याः सुखदायां छायायां सर्वेऽपि सुखशान्तिपूर्वकं निवसितुं सर्वविधम् अभ्युदयञ्च कर्तुं पारयेयुः।

---

## कर्तव्य-पालनम्।

यस्य यत् नियतं कर्म वर्तते तस्य समुचितरूपेण सम्पादनमेव कर्तव्य-पालनं कथ्यते। इदं जगतीतलं कर्मक्षेत्रमस्ति। अत्र यावन्तो[1] जनाः सृष्टाः सन्ति ते कर्मकरणायैव सृष्टाः सन्ति। अत्र यो मनुष्य-योनौ जन्म गृहीत्वा स्वस्थशरीरः अविकलेन्द्रियश्च भूत्वा निष्क्रियः स्वकर्तव्यपराङ्मुखश्च तिष्ठति तस्य कृते जीवनस्य[2] अधिकारो नास्ति। अत एव ईशोपनिषदि अयम् आदेशो वर्तते—

कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः।

अर्थात् यः कोऽपि नरो नारी वा स्वस्वकर्तव्यानां सम्यक्रूपेण पालनं करोति स एव अस्यां कर्मभूमौ जीवितुमिच्छेत् न तु निष्क्रियः। अतः स्वहिताय समाजहिताय च सर्वेषां कृते स्वस्वकर्तव्यानां पालनं नितराम् आवश्यकं वर्तते।

कर्तव्यपालनं हि मनुष्यमात्रस्य परमो धर्मः अस्ति। यः खलु आत्मनः कर्तव्यं न जानाति न च तस्य पालनं करोति तस्य जीवनं न केवलं निरर्थकं प्रत्युत हानिकारकमपि। कर्तव्य-पालनेनैव जना आत्मनः समाजस्य च हितं साधनं कर्तुं शक्नुवन्ति। सर्वासामपि समुन्नतीनां सिद्धीनां च मूलकारणं कर्तव्यपालनमेव भवति। विविधा विघ्नबाधाः सहमाना अपि ये जनाः स्वकर्तव्यपालनात् न विरमन्ते, "कार्यं वा साधयामि शरीरं वा पातयामि" इति येषां प्रतिज्ञा भवति ते एव वीरपुरुषा

---

१—जितने। २—जीने का।

जगति माननीया भवन्ति महत्वं च प्राप्नुवन्ति । अत एव जगतो महान् कर्मयोगी भगवान् श्रीकृष्णो गीतायाम् उपदिशति—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।

वस्तुतः कर्तव्यपालनस्यैव शिक्षार्थं भगवता भगवद्गीताया उपदेशो विहितः । गीताया आरम्भिकी कथा स्मर्यताम्[३] । उभयोरपि पक्षयोः सेना सुसज्जिता वर्तते । पदातयः अश्वारोहिणो गजारोहिणो रथिनो महारथिनश्च सर्वे योद्धारो युद्धक्षेत्रे अस्त्रशस्त्रादिसमन्विता परस्पराभिमुखम् उपस्थिता सन्ति । युद्धवाद्यानि[४] वाद्यन्ते । सर्वे एव सेनापतयः स्वस्वशङ्खान् आध्मायमानाः[५] सङ्ग्रामारम्भस्य घोषणा कुर्वाणाः सन्ति । द्रुतमेव समरारम्भो भविता[६] अस्ति । एतादृशे अवसरे महाधनुर्धरस्य अर्जुनस्य हृदये व्यामोहो भवति । स कातरो भूत्वा अस्त्रशस्त्रादिकं नीचैर्निधाय[७] भगवन्तं प्रार्थयते । "भगवन्" ! नाहं युद्धं करिष्यामि । अत्र ये ये योद्धारः उपस्थिता सन्ति तेषु ममैव गुरवः, आचार्याः पितामहाः, पितृव्याः,[८] भ्रातरः, भ्रातृपुत्राः,[९] दायादाः, श्यालाः, श्वशुराः, सम्बन्धिनः सुहृदश्च नयनयोरग्रे दृश्यन्ते । इमे एव मम पूजनीयाः माननीयाः, रक्षणीयाः, पालनीयाश्च । तत् किं तेषामेव शरीरेषु अहं शस्त्रप्रहारं करोमि ? इमानेव हत्वा राज्यं करोमि ? अलम् एतादृशेन राज्येन । येषामेव सुखाय राज्यं भवति ते एव यदि म्रियन्ते तर्हि मम एकाकिनो राज्यभोगेन किम् ? इत्युक्त्वा अस्त्रशस्त्रादिकं न्यस्य[१०] युद्धक्षेत्रे एव अर्जुनो विषण्णमानसः तूष्णीं[११] तस्थौ ।

अर्जुनः स्वबुद्ध्यनुसारं बहून् प्रज्ञावादान्[१२] उवाच परं तस्य इदं कार्यं सर्वथा असामयिकम् अधार्मिकम् अयौक्तिकम् अविचारितम् अमान्यम् अनार्यजनोचितं च आसीत् । अर्जुनः क्षत्रियकुलप्रसूतः[१३] आसीत् । कुल-

---

३—याद कीजिये । ४—युद्ध के बाजे । ५—फूँकते हुए । ६—होने वाला । ७—रखकर । ८—चचा । ९—भतीजे । १०—रखकर ११—चुप । १२—बुद्धिमानी की बातें । १३—उत्पन्न ।

कपटादिना अपहृतं स्वकीयं राज्यं पुनरपि धर्मयुद्धद्वारा परावर्तयितुं[१४] विहितसङ्कल्पो युद्धक्षेत्रे समुपागत आसीत्। तस्मिन् समये तस्य युद्धकरणमेव कर्तव्यमासीत्। परं स स्वकर्तव्यपालनात् पराङ्मुखो बभूव। क्षत्रियोभूत्वा अक्षत्रियोचितां कातरतां कर्तुमारेभे। अतो भगवान् श्रीकृष्णः तस्मै कर्तव्यपालनस्य उपदेशं दत्वा रणाय सन्नद्धं[१५] चकार। अत एव भगवद्गीता कर्मयोगशास्त्रमुच्यते।

लोकव्यवस्थायै कर्तव्यपालनस्य महती आवश्यकता वर्तते। यदि जनाः स्वस्वकार्याणि न कुर्युस्तर्हि लोकयात्रायां महती दुर्व्यवस्था समुत्पद्येत। वैयक्तिकं पारस्परिकं सामाजिकं वा जीवनं सर्वथा असमञ्जसं कष्टविनाशोन्मुखं च सम्पद्येत। यदि सर्वे स्वकर्तव्यपालनं न विधीयेरन् तर्हि क्षणमपि सांसारिको व्यवहारः चलितुं न शक्नुयात्। कल्पना क्रियताम्। यदि शासकाः प्रजा न पालयेयुः प्रजाश्च शासकान् न मानयेयुः, पितरौ पुत्रान् न पालयतः पुत्राश्च पितरौ न रक्षेयुः, गुरवः शिष्यान् न पाठयेयुः शिष्याश्च गुरुजनानां शुश्रूषां न कुर्युः, यदि स्वामिनः भृत्यान् न भरेयुः[१६] भृत्याश्च स्वामिनां हितं न साधयेयुः, तदा एकदिनमपि कस्यापि निर्वाहो भवितुमर्हति? एवमेव यदि कुम्भकारः पात्राणि न रचयेत्, रजकः[१७] वस्त्राणि न प्रक्षालयेत्, नापितः[१८] कचान् न कर्तयेत्, सुवर्णकारो[१९] भूषणानि न घटयेत्, वर्धकिः[२०] काष्ठानि न भिन्द्यात्, लोहकारो[२१] लोहकार्यं न कुर्यात्, कृषको भूमिं न कर्षेत्, भारवाहो भारं न वहेत्, सैनिकः सेवां न विदध्यात्, सारथिश्च शकटं न चालयेत् तर्हि सकलोऽपि लौकिको व्यवहारः छिन्नभिन्नः अव्यवस्थितश्च भविष्यति। कर्तव्यपालनस्यैव आदर्शं जगति उपस्थापयितुं भगवानपि अवतारं धृत्वा

---

१४—लौटाने के लिए। १५—तैयार। १६—भरण कर।
१७—धोबी। १८—नाई। १६—सोनार। २०—बढ़ई।
२१—लोहार।

विविधानि कार्याणि कुरुते। अत एव भगवता श्रीकृष्णेन गीतायां प्रतिपादितं यत्—

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।

कर्तव्यपालनस्य च अर्थः येन केनापि प्रकारेण कर्मकरणं नास्ति। यदा श्रद्धया भक्त्या सावधानतया कर्तव्यबुद्ध्या च कार्यं क्रियते तदैव तत् *कर्तव्यपालनं कथ्यते। यदि कश्चित् पाचको रसवतीं*[२२] करोति परं मनो लगयित्वा न करोति। अप्रक्षालितमेव तण्डुलं स्थाल्यां[२३] निक्षिपति। अपरिपक्वमेव अवतारयति। द्विदले हरिद्राधिक्यं कुरुते शाके च लवणं न्यूनम्। परिवेषणं[२४] च सम्यक् न करोति। अर्थात् समीचीनान्यपि वस्तूनि दूषयित्वा पुरः स्थापयति तर्हि तत् कर्तव्यपालनं नाऽभूत्। तत् *यथाकथंचित् कर्तव्यपालनं अभूत्। एवमेव बहवा भयेन लोभेन वा* कर्तव्यपालनात् च्युता भवन्ति। केचन असावधानतया एव स्वकर्तव्यं सम्यक् पालयितुं न प्रभवन्ति। कतिपये आलस्यवशादेव कर्तव्यभारं गृहीत्वापि तस्य निर्वाहं कर्तुं न पारयन्ति पदे पदे च आक्षेप तिरस्कार-भाजनानि भवन्ति। बहूनां स्वकर्तव्यस्य ज्ञानमपि नास्ति। ते उदर-*पूरणमेव जीवनस्य परममुद्देश्यं मन्यमाना निरर्थकमेव जीवनं यापयन्ति।* भूयांसः सत्कर्तव्यं परित्यज्य दुष्टकर्तव्येषु एव लीनाः सन्ति।

एवम् अनेकैः प्रकारैः कर्तव्यपराङ्मुखा पुरुषा समाजे उपलभ्यन्ते। परं इयं स्थितिः अतीव अनुचिता, व्यक्तेः समाजस्य च कृते महती हानिकरी अस्ति। कर्तव्यविमुखो मनुष्यः सर्वत्रैव निरादृतः सन् स्वयं तु दुःखं प्राप्नोत्येव समाजस्यापि दुःखकारणं भवति। न स परिवारे पृच्छ्यते[२५] न समाजे एव। लोकेन सहैव तस्य परलोकोऽपि नश्यति। स इतोऽपि भ्रष्टो भवति ततोऽपि भ्रष्टो भवति। एतद् विपरीतं तु ये जना यथोचितरूपेण स्वकर्तव्यपालने संलग्ना भवन्ति, न लाभेन न

२२–रसोई। २३–बटलोही में। २४–परोसना २५–पूछा जाता है।

यशसे न परानुरञ्जनाय अपि तु कर्तव्यबुद्धया कार्यं सम्पादयन्ति ते गृहे तिष्ठन्तु बहिर्वा, सर्वत्रैव समादरं लभन्ते। बाहुबलात् सततमेव सुखिनः तिष्ठन्ति निर्भयाश्च विचरन्ति। समाजस्य सुखे शान्तौ सुव्यवस्थाया च ते हेतवो भवन्ति।

इदानीं जगति सर्वेष्वपि क्षेत्रेषु महती दुर्व्यवस्था दृष्टिगोचरी भवति। अहोरात्रम् आन्दोलनानि उपद्रवाः हड्तालाः[२६] सघर्षाः कोलाहलाः कलहानि च श्रूयन्ते। सर्वत्रैव आकुलतायाः अशान्तेः साम्राज्य विजृम्भते[२७]। मनुष्यता दानवताया भयङ्करैः आघातप्रतिघातैः छिन्न-भिन्नकलेवरा मृत्युशय्यायां शयाना अस्ति। सकलश्च संसारो नरक इव महाभयङ्करः क्लेशकरश्च सवृत्तो वर्तते। एतत् सर्वमपि सर्वे एव जनाः अनुदिन प्रत्यक्षीकुर्वन्ति। तत्र विशेषविवरणस्य आवश्यकता नास्ति। परन्तु अत्र कारणं किं वर्तते? स्वकर्तव्यपालनस्य अभाव एव। शासकाः प्रजाजना वा, अध्यापका विद्यार्थिनो वा, अधिकारिणः अधिकृता वा, स्वामिनो भृत्या वा सर्वे एव अज्ञानवशात् लोभवशात् ईर्ष्यावशात् द्वेषवशात् क्रोधवशात् वा स्वकर्तव्यपालनात् च्युता असत्कर्मपरायणाश्च जाताः सन्ति। न ईश्वरस्य भयं वर्तते न लोकलज्जा अस्ति। यथेच्छम् आचरन्ति यथेच्छं व्यवहरन्ति। कोऽहम् किञ्च मे कर्तव्यम् इत्यस्य स्वप्नेऽपि ध्यानं नास्ति। मनुष्याः पशुभ्योऽपि नीचतां गताः सन्ति। रक्षकाः भक्षकाः सवृत्ताः[२८]। न्यायाधिकारिणो निःशङ्कोचम् अन्याय कुर्वते। त्यागिनः सङ्ग्रहे सलग्नाः सन्ति। मध्यस्थाः पक्षपात विदधति। धर्मस्थानेषु अधर्माचरणं भवति। नेतारः स्वार्थवशात् लोकवञ्चनां कुर्वन्ति। एवञ्च सर्वत्रैव अन्यायस्य अधर्मस्य च साम्राज्य दृष्टिगोचरी-भवति। अतएव सर्वत्र अशान्तिः अव्यवस्था सघर्षश्च प्रतिदिनं वर्द्ध-मानो वर्तते। परं यदि सर्वेऽपि स्वकर्तव्यपरायणा भवेयुस्तदा ससारोऽयं

---

२६—हड़ताल। २७—फैला हुआ है। २८—हो गये।

सत्यवक्तृत्वा जनानां हृदये तथा महीयसी शक्तिः समुदेति यया ते सर्वत्र अप्रतिहतगतयो भवन्ति सर्वत्र च विजयिनो जायन्ते सदैव च स्वस्थचित्ताः निर्भयाश्च सुखं निवसन्ति। किमधिकं, सत्यव्रतपालनाद् भगवत्त्वम् अपि लब्धुं शक्यते। अत एव उपनिषदि लिखितं वर्तते—

सत्येन लभ्यस्तपसा ह्येष आत्मा।

इमे खलु गुणाः सत्यभाषणस्य सन्ति। एतद् विपरीतं तु ये जनाः प्रतिदिनं निःसंशयम् अनृतमेव भाषन्ते अनृतभाषणे एव च ख्यातिं लभन्ते तेषु कस्यचित् न श्रद्धा जायते नापि विश्वासः। का वार्ता अन्येषाम्, आत्मीया अपि जनाः माता, पिता, भ्राता, भगिनी, जाया, सन्ततिश्च ततो विरज्यन्ते। सहवासिनः प्रतिवेशिनश्च[३] सदा तस्य गर्हणां[४] कुर्वन्ति। विश्वासघातभयात् तस्य सत्यमपि वचनं जना अनृतमेव मन्यन्ते। अत एव स सर्वेष्वपि कार्येषु जनताया सहयोगाद् वञ्चितो भवति। समाजे, सभायां, गोष्ठीषु, परिवारे, सम्बन्धिनां समुदाये च एतादृशा अनृतभाषिणो जनाः सर्वत्रैव लज्जिता नम्रमस्तका भयभीता इव च तिष्ठन्ति। एवं च ते तथा आत्मानम् अधः पातयन्ति यथा जन्मशतेनापि परमात्मनः प्राप्तिः तेषां कृते सुदुर्लभा भवति।

अन्यच्च सत्यभाषणम् अन्येभ्योऽपि अनेकेभ्यः पापेभ्यो जनान् रक्षति। नहि सत्यवादिनो जनाः कदापि चौर्यं कुर्वन्ति, न वा क्वचिद् व्यभिचारं कुर्वन्ति। न अपलपन्ति[५] नापि कञ्चित् वञ्चयन्ति। यदि ते चौर्यं व्यभिचारादिकं च कृत्वा स्वयमेव प्रकाशयेयुस्तर्हि को नाम लाभः स्यात् तेषाम्? इदमेव विचार्य सत्यवादिनो जनाः सदैव दुष्कर्मभ्यो दूरे एव तिष्ठन्ति। एतद्विपरीतम् अनृतभाषणम् अनेकेषां पापकर्मणाम् उत्पादकं प्रोत्साहकञ्च भवति। अनृतभाषिणो जना न चौर्याद् बिभ्यति[६] नापि व्यभिचारात्। न अपलापात् न परवञ्चनादेव। ते विचारयन्ति—यदि

३—पड़ोसी। ४—निन्दा। ५—बहाना करते हैं। ६—डरते हैं।

सर्वमपि दुष्कर्मं कृत्वा वयं न अङ्गीकरिष्याम: यदि च कश्चित् साक्ष्य[7] न दद्यात् तत् को नाम अस्माकं किं दूषयितुमर्हति। एवं मनसि निश्चित्य ते सततमेव दुष्कर्मपरायणा तिष्ठन्ति। अत एव अस्माभिः सततमेव सत्यभाषणाय प्रयतितव्यं तथा च प्रतिज्ञातव्यं यथा एकमपि अनृत वचनं कदाचिदपि मुखात् न निःसरेत्[8] इति।

अस्माकं गृहे गृहे सत्यनारायणव्रतकथा भवति। नहि कस्यापि हिन्दुजनस्य ईदृशं गृहं भविष्यति यत्र विवाहादिमङ्गलावसरेषु अस्याः कथायाः वाचनं श्रवणं वा न सम्पद्येत। परन्तु अल्पीयांसो जना अस्याः व्रतकथायाः शिक्षायाः उपरि ध्यानं ददते। इयं व्रतकथा अपि अनेकोदाहरणैः अस्मभ्यं सत्यभाषणस्यैव उपदेशं ददाति सत्यभाषणादेव च भगवान् मिलतीति शिक्षयति।

अस्माकं पुराणेषु इतिहासग्रन्थेषु च सत्यवादिनाम् ईदृशानि अनेकानि चरितानि मिलन्ति यानि पठित्वा महान् विस्मयो भवति। महाराजो दशरथः सत्यपालनायैव स्वकीयं प्रियतमं तनयं रामचन्द्रं चतुर्दशवर्षेभ्यो वने विवासयामास। परमप्रसिद्धः सत्यवादी राजा हरिश्चन्द्रो वने वने बभ्राम, चाण्डालगृहे दास्यं चकार, आत्मनः तनयं जायां च विचिक्राय[9], विविधा यातना सेहे, पदे पदे च अपमानितो बभूव परं सत्यवदनात् पदमपि पृष्ठतो न जगाम। सत्यव्रतपालनस्यैव प्रभावात् अजातशत्रुः धर्मराजो युधिष्ठिरः कौरवाणां महतीं सेनां विजित्य विजयश्रियं लेभे। राजा मयूरध्वजो निजपुत्रस्य शिरो अरया[10] द्विधा चिच्छेद परं सत्यं न परित्यक्तवान्। इयं तु पुरातनी वार्ता अस्ति। अस्मिन् अपि युगे गतशताब्द्यामेव अत्र न कश्चित् असत्यं वदति स्म न असत्यम् अभियोगं[11] चालयति स्म न च असत्यं साक्ष्यं ददाति स्म इति भारतभ्रमणार्थं समागतानां विदेशिनां यात्रिणां लेखेभ्यो ज्ञायते।

---

७—गवाही। ८—निकले। ९—बेंच दिया। १०—आरा से।
११—मुकदमा।

एव भारतीया जना सत्यभाषणे सर्वेषु अपि देशेषु पर प्रसिद्धि गता आसन्। परन्तु दु खस्य अय विषयो वर्तते यद् इदानीं खलु असत्यभाषणे एव सर्वेषा प्रवृत्तिर्विद्यते। न असत्यभाषणात् कश्चित् लज्जते। महतो महान्तोऽपि जनाः क्षुद्रस्यापि स्वार्थस्य कृते नि'सङ्कोच मिथ्याभाषण कुर्वाणाः असत्यमेव अभियोग चालयन्तः असत्य च साक्ष्य ददतो[१२] दृष्टिपथम् आयान्ति। बहूना तु असत्यभाषणस्य अभ्यास' सञ्जातो वर्तते। अतस्ते स्वार्थं परार्थं विनापि इतस्ततो मिथ्याभाषण कुर्वन्तो विलोक्यन्ते। एतादृशा जना यावद् दिने दशवारानपि मिथ्या न वदेयुः तावत् तेषा भुक्तमेव परिपक्व न भवति। एव ग्रामीणे नागरिके वा समाजे शिक्षितेषु अशिक्षितेषु वा सर्वत्रैव मिथ्याभाषणस्य प्रचारम् अवलोकयामः। पर यदि वय निज कल्याण कामयामहे, यदि पूर्वजाना गौरव सुरक्षितु वाञ्छाम, यदि सर्वत्र सम्मान समीहामहे, यदि च सर्वेषु कार्येषु साफल्यम् अभिलषामः तदा कदापि मुखात् मिथ्यावचन न निस्सारणीयम्।

---

# सच्चरित्रता।

*मानवीयेषु गुणेषु सच्चरित्रता नाम एकः सर्वातिशायी गुणः अस्ति।* येभ्यो गुणेभ्यो मनुष्या महत्त्व प्राप्नुवन्ति, उच्चपदवीम् अधिरोहन्ति, समाजस्य भूषणानि भवन्ति, मनुष्यत्व च अतिक्रम्य देवत्व प्राप्नुवन्ति तेषु सच्चरित्रतायाः प्रथम स्थानमस्ति। यस्मिन् मनुष्ये अय गुणो भवति स निर्धनो भवतु धनवान् वा, निर्गुणो भवतु गुणवान् वा, दुर्बलो भवतु बलवान् वा भवतु, सर्वत्र समाद्रियते, सर्वत्र मन्यिते सर्वत्र च सम्मान

---

१२—देते हुए।

भते। दिने रात्रौ वा स निर्भय विचरितु शक्नोति। सङ्कटे समुपस्थिते वै तस्य सहायका भवन्ति। सच्चरित्रता एकतादृशो मन्त्र अस्ति येन वैऽपि महान्तो लघवो वा जना वशीभूता जायन्ते। अनेन गुणेन न स चलम् आत्मानमेव प्रत्युत आत्मन परिवार देश जाति समाज च चै पदे प्रापयति[1]। सच्चरित्रतायाम् ईदृश कोऽपि लोकोत्तर प्रभावो तेन यस्य पुरस्तात् महतो महान्तोऽपि जना निष्प्रभा भवन्ति।

तत् का नाम सच्चरित्रता? के के च गुणा सच्चरित्रतायाम् अन्तर्भवन्ति? सत्यवादिता, शील, सौजन्यम्, जितेन्द्रियता, गुरुजनेषु श्रद्धा, विनय, अलोलुपता, मनसा अपि परदारेषु अस्पृहा, सता ससर्ग, असता परित्याग, अदम्भ, अपाखण्ड सर्वभूतै सह समीचीनो व्यवहारश्चेति गुणा एकशब्देन सच्चरित्रता इति कथ्यन्ते। एभिरेव गुणै जना सच्चरित्रा इति मन्यन्ते। एतद्विपरीतम्—असत्यवादिता, अजितेन्द्रियता, दौर्जन्यम्, गुरुजनेषु अश्रद्धा, अविनय, लोलुपता, परदारेषु परधनेषु च स्पृहा, सताम् असङ्गति, असता ससर्ग, सर्वै सह अनुचितो व्यवहारश्चेति दोषा यदा जनेषु आगच्छन्ति तदा ते दुश्चरित्रा इति कथ्यन्ते। इतिहासग्रन्थेषु लिखितानां चरित्राणाम् अध्ययनेन अहोरात्र मत्यक्ष दर्शनेन च ज्ञायते यत् दुश्चरित्रा जना जगति सर्वत्र दुर्गति लभन्ते, पदे पदे अपमानिता भवन्ति, यद्वे बहिर्वा सर्वत्रैव तिरस्कृता जायन्ते। न तेषु कश्चित् विश्वास करोति नापि श्रद्धाम्। न कश्चित् तैः सह सङ्गतिं कर्तुं वाञ्छति नापि सम्भाषणं कर्तुं समीहते। न तेषां कश्चित् सहायको भवति नापि परित्राणकर। यत्रैव दुश्चरित्रा जना गच्छन्ति तत्रैव काकवत् दूरीक्रियन्ते। न तेषां कृते लोके स्थान मिलति नापि परलोके। इतो भ्रष्टा ततो भ्रष्टाश्च ते न केवलम् आत्मानमेव अध पातयन्ति प्रत्युत स्वकीय परिवार समाज देश जाति चापि रसातल प्रापयन्ति। स्वय नष्टा परेषामपि सर्वनाशे कारणानि भवन्ति। महतो

[1]—पहुंचाता है।

महीयान् धनाढ्यो बलवान् विद्वान् वा भवतु परं यदि स दुश्चरित्रो भवति तदा तस्यापि इयमेव दशा भवति। कामं स धनबलात् विद्याबलात् शारीरिकबलात् वा आत्मनो दुश्चरित्रताम् दश पञ्च दिनानि गोपायित्वा[2] प्रतिष्ठां प्राप्नुयात्, महत्त्वं लभेत, यशो वा समुपार्जयेत्, परं यदा तस्य दुष्कर्मणां भाण्डस्फोटो[3] भवति, सर्वत्र च तेषां प्रसिद्धिः जायते, मुखे मुखे च चर्चा भवति तदा तस्य न विद्याबलं न धनबलं न देहबलं वा तस्य प्रतिष्ठां रक्षितुं शक्नोति। तदानीं तु तस्याऽपि सा एव दुर्गतिः दुर्दशा च भवति यादृशी अन्येषां दुश्चरित्राणाम्।

विचारयन्तु नाम। येन कारणेन लक्ष्मणः शूर्पणखाया नासिके कर्णौ च कर्तितवान्[4]? येन वा कारणेन सर्वशास्त्रनिष्णातो महाबलवान् राक्षसाऽधिपतिः रावणो वा सवंश कालकवलितो बभूव? किं नाम कारणमस्ति येन राजा नहुषः स्वर्गं गतोऽपि ततो नीचैः निपातितः[5]। अथवा नास्ति दूरे गमनस्य आवश्यकता। इदानीमेव परःसहस्रा जनाः येन कारणेन गृहवासं परित्यज्य कारागारेषु[6] सदा विविधा यातनाः सहन्ते? आत्मनो दुश्चरित्रतया एव। एष एक एव दोषः परःशतानामपि अनर्थानां जनकः, सर्वविधाया अपि दुर्गतेः आदिकारणम्, समुन्नतेः सुमहत् प्रतिबन्धकम्, मानवताया महान् शत्रुः, सर्वनाशस्य च परमं कारणमस्ति। अतो यथाशक्ति तथा प्रयतनीयं पुरुषेण यथा दुश्चरित्रताया नामाऽपि न तस्मिन् तिष्ठेत्। अयमेव आत्मकल्याणस्य मूलमन्त्रः अवगन्तव्यः।

बाल्यकालादेव चरित्र-निर्माणं जायते। बाल्यकाले एव उचितस्य अनुचितस्य वा यस्य कर्मणः अभ्यासो जायते तदेव दृढमूलं सत् चरित्रमिति कथ्यते। बाल्यकाले एव बहवो बालका असत्यवादिनो दुष्टा बहुशः चौरा लम्पटाश्च भवन्ति। यदि एतेषाम् उपरि बाल्यकाले एव

---

२—छिपाकर। ३—भण्डाफोड़। ४—काटा। ५—गिरा दिया गया। ६—जेलखानों में।

मातुः पितुः वा नियन्त्रणं न भवति तदा ते आजीवनं तथैव आचरन्ति। एतद्विपरीतम्—केचन बालकाः बाल्यकालादेव सत्यवादिनः सौम्याः अलोलुपाः अल्पवदाः शिष्टस्वभावाश्च भवन्ति। तेषाम् अस्मिन् स्वभावे यदि केनापि कारणेन असत्सङ्गेन वा परिवर्तनं न जायते तदा तेऽपि आजीवनं तथैव तिष्ठन्ति। अत एव चरित्रनिर्माणस्य भूयान्[7] भारो मातुः पितुश्च उपरि भवति। ते बाल्यकाले बालकान् येनैव मार्गेण गमयिष्यन्ति[8] तेनैव मार्गेण गमिष्यन्ति[8], यादृशमेव अभ्यासं जनयिष्यन्ति तादृश एव अभ्यासो भविष्यति, यदेव कर्तुम् उपदेक्ष्यन्ति[9] तदेव करिष्यन्ति। अतो मात्रा पित्रा च बाल्यादेव बालानां चरित्रनिर्माणाय प्रयत्नः कर्तव्यो येन ते अग्रे सुचरित्रा भवेयुः।

एवमेव चरित्र-निर्माणे संसर्गस्याऽपि महान् प्रभावो भवति। संसर्गात् सज्जना अपि बालका दुर्जना भवन्ति दुर्जनाश्च सज्जनाः। अतो बाल्यकाले मात्रा पित्रा, यौवने च स्वयमपि दुर्जनसंसर्गात् आत्मनो रक्षणाय अपि प्रयतनीयम्। अत एव कथयन्ति नीतिकाराः—

संसर्गजा दोषगुणा भवन्ति, इति।

तस्मात् सर्वथा सच्चरित्रताया उपरि ध्यानं दातव्यम्। अहरहः प्रातरुत्थाय मनसा विचारणीयम्—के मयि दोषाः के च दुर्गुणा इति। ये ये गुणैः जना जगद्वन्दनीया भवन्ति ते सर्वे भर्तृहरिणा स्वकीये नीतिशतके लिखिताः। यथा—

वाञ्छा सज्जन-सङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिः लोकापवादाद् भयम्।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले—
एते यत्र वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः॥

———

७—बहुत बड़ा। ८—ले जायेंगे। ९—उपदेश देंगे।

# परोपकारः।

परेषां हिताय यत् यत् कार्यं क्रियते तत् सर्वं परोपकार इति कथ्यते। ये ये गुणा मानवजीवनस्य महत्त्वं वर्द्धयन्ति तेषु परोपकारस्य प्रमुखं स्थानं वर्तते। परोपकारस्य भावना हि अन्तःकरणं पवित्रताम् उत्पादयति, शुष्केऽपि हृदये स्नेहरसं प्रवाहयति, भक्तिभावं भरति, दयाया उद्रेकं जनयति, ईर्ष्याद्वेषादिकं नाशयति, प्राणिमात्रे च भ्रातृभावं वर्द्धयति। एष गुणेषु अनुत्तमो गुणः, धर्मेषु सर्वश्रेष्ठो धर्मः, व्रतेषु च सर्वोत्तमं व्रतम् अस्ति। भगवान् वेदव्यासस्तु महाभारते परोपकारमेव धर्मं परपीडनमेव च अधर्मं निरूपितवान्[1]। इयमेव अष्टादशानामपि पुराणानां शिक्षायाः सारभूता *शिक्षा अस्ति। यथा*—

> अष्टादश पुराणानां व्यासस्य वचनं द्वयम्।
> परोपकारः पुण्याय पापाय परपीडनम्॥

अतः सर्वैरेव पुरुषैः स्वकार्य-सम्पादनेन सहैव परोपकार-करणे अपि यथाशक्ति अवश्यमेव प्रवर्तितव्यम्। यो नाम नरो नारी वा स्वकीयेन शरीरेण बुद्ध्या बलेन वैभवेन वा क्षणमपि परेषाम् उपकारं करोति, क्षणमपि परेषां दुःख-दैन्याऽवसरे च साहाय्यं कुरुते स धन्यवादार्हः, स एव यथार्थो मनुष्यः, तस्यैव च जीवितं सफलम्।

बहवो जना एवं विचारयन्ति यत्—वयं भिन्नाः अन्ये च भिन्नाः। तत् किमर्थं तेषाम् उपकाराय स्वार्थ-हानिः कर्तव्या? इदं धनं मम, इदं बलं मम, इयं विद्या मदीया तत् कथम् अनेन धनेन बलेन अनया विद्यया वा परेषां कार्यं साधयामि? तेन मम को लाभः? दुग्धं पीत्वा घृतं भुक्त्वा अहरहश्च व्यायामं कृत्वा महता यत्नेन शरीरमिदं पालितं

1—बतलाया।

पोषितश्च। अहोरात्रं घोरं परिश्रम्य, माघमासस्य शीतं ज्येष्ठमासस्य च घर्मम्[2] अविगणय्य[3] क्षुधां पिपासां विस्मृत्य, स्वास्थ्यं नाशयित्वा चौरादिभिश्च संरक्ष्य महता क्लेशेन समुपार्जितमिदं धनम्। बहुषु विद्यालयेषु भ्रमित्वा, अनेकान् गुरुजनान् उपास्य, दिवानिशं परिश्रम्य, कण्ठशोषं रटित्वा अनेकान् क्लेशान् च सोढ्वा द्वादशभिः वर्षैः समुपार्जिता मया विद्या। विद्या बलं धनं वा सर्वमपि मया स्वपौरुषेण समुपार्जितम्। किं नाम तत्र अपरस्य लगितं येन स्वार्थं विनैव तैरिदम् अन्येषां कार्यं साधयामि? बहवो जना एवमेव विचारयन्ति। अत एव ईदृशा जनाः सम्पन्ना अपि कदाचित् परोपकारेषु प्रवृत्ता न भवन्ति। स्वार्थसाधने एव सर्वमपि धनादिकं व्ययीकुर्वन्ति।

परन्तु ईदृशा विचारा समुचिता श्लाघनीया[4] वा न भवन्ति। क्षुद्रहृदयानां खलु पुरुषाणाम् इमे विचाराः। अयं मदीयः अयं च अन्यदीय इति लघुचेतसां[5] गणना। वस्तुतस्तु वयं सर्वेऽपि प्राणिनः एकस्यैव परमात्मनः सन्ततिस्वरूपा अतो वयमपि सर्वे बन्धव एव। कामं[6] शरीरे वर्णे जातौ कर्माणि गुणे अवस्थायां वा भूयान् भेदो वर्तते अस्मासु। आहारव्यवहाराश्च बहुधा भिन्नभिन्ना एव सन्ति अस्माकम्। परं बाह्यभेदा इमे न तु वास्तविकाः। वास्तविकं तु स्वरूपम् अस्माकं सर्वेषामपि एकमेव। अतो भेदबुद्धिं परित्यज्य सर्वैरेव परस्परं आत्मवत् व्यवहर्तव्यम्। एक एव अस्माकं पिता एका एव च माता वयं च सर्वे भ्रातरो भगिन्यश्च इत्येव मनसि निश्चित्य मिथो[7] भ्रातृवत् व्यवहर्तव्यम्। अन्यस्य दुःखं स्वकीयं मत्वा तस्य अपनयनाय[8] प्रयत्नः कर्तव्यः। अन्यस्य सुखं स्वकीयं मत्वा तस्य सम्पादनाय प्रयतितव्यम्। अयमेव सत्यो मार्गो मानवानां धर्मः, शान्तेः सुखस्य च परमं साधनम् अस्ति।

---

२—घाम। ३—कुछ न समझकर। ४—सराहनीय। ५—छोटे हृदय वालों का। ६—भले ही। ७—आपस में। ८—दूर करने के लिए।

अयमेव च ऐहलौकिकस्य निःश्रेयसस्य च निष्कण्टकः पन्थाः । अतो विद्यया बुद्ध्या बलेन वित्तेन अन्येनापि वा येन केनापि उपायेन यथा-सम्भव परेषां हित-साधने प्रवर्तितव्यम् ।

यदि संसारे परोपकारिणो जना न भवेयुस्तदा लौकिके व्यवहारे महती बाधा महती च असुविधा आपद्येत । एवम्भूतो जगतीतले कोऽपि जनो नास्ति यः केवल स्वकीयेनैव धनादिना स्वकीयं सर्वमपि कार्यं सञ्चालयितुं प्रभवेत् । सर्वेषामपि कृते जीवने अन्येभ्यः सहायताग्रहणस्य अन्येषां वा धनादिना सुखोपभोगस्य अवसरः समापतति । प्रायः सर्वेऽपि जनाः कार्यवशात् बहिर्गच्छन्ति । तत्र प्रायः सर्वेऽपि अन्यनिर्मितासु धर्मशालासु निवसन्ति, अन्यखानितानां कूप-तडागादीनां जलं पिबन्ति, अन्यरोपितानां वृक्षाणां शीतलच्छायासु विश्राम्यन्ति, अन्येषाञ्च कदाचित् अन्नपानादिकमपि गृह्णन्ति । नहि कश्चित् महाधनिकोऽपि जनो यत्र यत्र गमिष्यति तत्र तत्र स्वकीये एव गृहे निवत्स्यति[६] स्वकीयस्यैव च कूपस्य जलं पास्यति इति कथमपि विश्वासः कर्तुं शक्यते । दरिद्रा भवेयुर्धनिका वा, केऽपि पर-साहाय्य विना कार्यसञ्चालनं कर्तुं न शक्नुवन्ति । अन्यकृतस्तेभ्यः साहाय्य ग्रहणस्य आवश्यकता भवत्येव । अतो यदि न स्वकर्तव्य-बुद्ध्या तर्हि प्रत्युपकार बुद्ध्या एव परोपकारः कर्तव्यो येन मनुष्यऋणात् मुक्तिर्भवेत् ।

प्रकृतिरपि अस्मभ्यं परोपकारस्यैव शिक्षां ददाति । प्राकृतिकाः सर्वेऽपि स्थावरा जङ्गमा वा पदार्थाः परोपकारे एव अहर्निशं प्रवृत्ताः सन्ति । विचारयन्तु मनाक् मनसि । सूर्यः तपति । चन्द्रमा विद्योतते । वायुः वाति । मेघा वर्षन्ति । नदी प्रवहति । तरवो फलन्ति । कुसुमानि विकसन्ति । सर्वेऽपि इमे दिवानिशं स्वे स्वे कार्ये निरताः सन्ति । तत् किम् एतेषां कश्चित् स्वार्थो वर्तते ? किं तरवः स्वयं फलानि भक्षयन्ति ?

---

६—रहेगा ।

कुसुमानि किं स्वयं गन्धान् जिघ्रन्ति[10] । मेघानां किं क्षेत्राणि सन्ति येषां सेचनाय ते वर्षन्ति ? वायुः किम् आत्मनो जीवनाय वाति ? चन्द्रमाः किम् आत्मानम् आह्लादयितुं विद्योतते ? दिवाकरः[11] किं स्वहिताय तपति ? सरितो वा किं स्वस्य स्नानाय प्रवहन्ति ? नहि । अन्येषामेव हिताय संवर्द्धनाय च इमाः सर्वाः प्रवृत्तय एतेषाम् ।

येषां क्षुद्रहृदयानां मानवानां हृदये परोपकारमयी भावना नास्ति, ये रात्रौ दिवा च स्वकीयस्यैव उदरस्य पूरणे परायणाः सन्ति, स्वप्नेऽपि परेषां हितं न चिन्तयन्ति, ते मानवजातेः कलङ्कस्वरूपा अधमा जनाः पशुसदृशा एव मन्तव्याः । येषां कठोरे हृदये विपत्सागरे पतितान् जनान् विलोक्य वेदना न जायते, ये बुभुक्षया[12] पीड्यमानं म्लानमुखं जनं निरीक्ष्य दुःखं नाऽनुभवन्ति, आर्तजनानां करुणापूर्णं क्रन्दनं श्रुत्वा येषां हृदयं द्रवीभूतं न भवति ते पाषाणहृदयाः जना वृथा जीवन्ति अदोन च मानवकुलं कलङ्कयन्ति । एतादृशानां स्वार्थपरायणानां परोपकार—शून्यहृदयानां कुलाधमानां जीवनेन अलम् ।

अस्माकं देशे अनेके एतादृशाः स्वनामधन्याः परोपकारिणो महापुरुषा बभूवुः । महाराजः शिबिः शरणागतस्य कपोतस्य[13] रक्षणाय स्वमांसं यावत्[14] श्येनाय[15] समर्पितवान् । महर्षिर्दधीचिः देवानां हिताय जीवितानि अस्थीनि[16] अपि तेभ्यो दत्तवान् । महाराजो मयूरध्वजः अन्यस्य ...ा निस्तारणाय स्वकीयं पुत्रं तस्मै समर्पयामास । एतादृशा एव अनेके ...परोपकारनिरताः पुरुषा बभूवुः ये न केवलं धनं वित्तं वा प्रत्युत स्वकीय ...शरीरमपि अन्यस्य हिताय विसर्जितवन्तः । अत एव तेषाम् ...यापि गृहे गृहे यशोगाथा गीयते । येषाञ्च नामस्मरणमात्रेण अस्माकं ...मस्तकं गौरवेण समुन्नतं भवति । विनश्वरेण शरीरेण ते शाश्वतं यशः

---

१०—सूँघते हैं । ११—सूर्य । १२—भूख से । १३—कबूतर के । १४—तक । १५—बाज के लिये । १६—हड्डियाँ ।

४

समुपार्जितं येन आकल्पान्तं न केवलं भारतम् अपि तु समस्तोऽपि मानवसमाजो जगति यशोभाजनं स्थास्यति । इदानीमपि श्रीमालवीयमहोदयसदृशा अनेके महापुरुषा जन्म गृहीतवन्तो येषां सम्पूर्णमपि जीवनं परहित-सम्पादने एव गतम् । ते परार्थमेव जीवितवन्तः परार्थमेव च हसन्तो मृत्युमालिङ्गितवन्तः । अतः सर्वैरेव यथाशक्ति परेषां हितसम्पादनाय अवश्यं यतनीयम् ।

---

## उद्योगपरायणता ।

कस्यापि कार्यस्य सिद्धये उद्योगस्य महती आवश्यकता भवति । नहि किमपि लघु महत् वा कार्यं केवलम् इच्छामात्रेण आरम्भमात्रेण वा सिद्ध्यति प्रत्युत यदा तदर्थम् उद्योगः नियतो प्रयत्नो विधीयते तदैव सिद्धिर्भवति । उद्योगेन साधारणा अपि जना महान्ति महान्ति कार्याणि साधयितुं शक्नुवन्ति । परं यदि उद्योगो न विधीयेत तर्हि भोजनप्राप्तिरपि असम्भवा भवितुमर्हति । अत एव नीतिकाराः कथयन्ति—

उद्योगेन हि कार्याणि सिद्ध्यन्ति न मनोरथैः ।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

सर्वदैव वयम् उद्योगस्य महत्त्वम् अवलोकयाम । पूर्वम् एकवारमपि भोजनं येषां कृते दुर्लभम् आसीत् ते एव उद्योगेन महान्तो धनवन्तः सम्पन्ना अवलोक्यन्ते । ये कदाचित् शतशो विशीर्णानि[1] वस्त्राणि धारयन्तो महता क्लेशेन अङ्गगोपनं कर्तुं शक्नुवन्ति स्म ते एव बहुमूल्यैः कौशेय[2] वसनैः विभूषितशरीरा राजभवनेषु सुखपूर्वकं विराजन्ते । मरुप्रान्तात्[3] अनेके "मारवाड़ी" जना एकं जलपात्रमेव आदाय

---

१—फटे हुए । २—रेशमी । ३—मारवाड़ से ।

समागता अत्र परं ते एव सम्प्रति महान्तो धनिका लक्षाधीशाः कोटिपतयश्च सम्पन्ना वर्तन्ते इति प्रायः सर्वे जानन्ति। किमधिकं कथयामः। उद्योगेन अलभ्यम् अपि लब्धुं शक्यते, असाध्यम् अपि साधयितुं शक्यते, असम्भवमपि च सम्भवं कर्तुं शक्यते। उद्योगेन भिक्षुको राजा भवितुं शक्नोति, दुर्बलो बलवान् भवितुं शक्नोति, अविद्वान् विद्वान् भवितुं पारयति दुःखितश्च परमं सुखं प्राप्तुं शक्नोति।

ये जना सततमेव उद्योगपरायणा तिष्ठन्ति तेषां कृते संसारे किमपि असाध्यं दुर्लभं वा नास्ति। उद्योगिनः पुरुषस्य दैवमपि साहाय्यं कुरुते। सिद्धयः सततमेव तस्याग्रे बद्धाञ्जलयः उपस्थिताः तिष्ठन्ति। कमलालया[४] किङ्करी इव निरन्तरं तं सेवमाना तिष्ठति। विघ्नबाधाः भयभीता इव कदाचिदपि तस्य पुरस्तात् उपस्थातुं न शक्नुवन्ति। सफलता जीवनसङ्गिनी इव सदैव तस्य आलिङ्गनं कामयमाना[५] निवसति। प्रकृतिः प्रजा इव स्वकीयं सर्वमपि वैभवं तस्मै उपायनीकरोति[६]। अपि च अप्रतिहता गतिर्भवति उद्योगिनः पुरुषस्य जले स्थले आकाशे वा। अद्य जगतीतले यद् वयं सर्वतो भौतिकं समुत्कर्षं पश्यामः स सर्वं अपि उद्योगपरतायाः एव मङ्गलमयं परिणामं अस्ति। यदि उद्योगिनो जना न स्युः, यदि उद्योग-दिवाकरः अस्तं गच्छेत्, आलस्य-निशीथिनी[७] च सर्वतो व्याप्ता जायेत तदा तत्कालमेव जगतः प्रलयः सम्पद्येत।

संसारे एतादृशा ईदृशा महापुरुषा जन्म गृहीतवन्तो ये स्वकीयोद्योगबलेन असम्भवम् अपि कर्म सम्भवं सम्पादयामासुः। इतिहासे ईदृशानाम् उदाहरणानां न्यूनता नास्ति। महाराजो भगीरथः प्रबलं तपः कृत्वा भगवतीं गङ्गां स्वर्गात् महीतले आनिनाय[८]। राजर्षिवरो विश्वामित्रो

---

४—लक्ष्मी। ५—चाहती हुई। ६—भेंट के रूप में दे देती है। ७—रात। ८—ले आये।

वशिष्ठेन पुनः पुनः प्रतिषिद्धोऽपि उद्योगबलेन ब्रह्मर्षिता प्राप । उद्योगस्यैव प्रभावेण समुद्रपारे नीता भगवती सीता हनूमतो हस्तगता बभूव । उद्योगस्यैव अयं प्रभावो वर्तते यत् दुर्योधनेन निर्वासिता अपि पाण्डवाः पुनरपि स्वकीयं राज्यं लब्धुं समर्था बभूवुः । अथवा त्यज्यताम् इदं सर्वं वृत्तम् । स्वदेशस्यैव पराधीनतायाः स्वाधीनतायाश्च इतिहासं पश्यत । कियता उद्योगेन वैदेशिका वणिजः अस्माकं देशस्य उपरि शासनं कर्तुं शेकुः । अनेकानि शैलशिखराणि उल्लङ्घ्य, शतशततरङ्गसङ्कुलं सागरं पारेकृत्वा, महाक्लेशकरीं मरुमयीं भूमिं अतिक्रम्य, विविधानि कष्टानि सहित्वा, अनेकं वर्षाणि घोरं परिश्रम्य, अनेकानि युद्धानि कृत्वा, सहस्र सहस्र प्राणानाञ्च आहुतीर्दत्वा ते अस्य देशस्य उपरि अधिकारं विस्तारयामासुः । समस्ते इतिहासे वैदेशिकानामिदं कार्यम् उद्योगपरतायाः प्रकृष्टतमम् उदाहरणम् अस्ति ।

पराधीनता कस्यापि देशस्य कृते महान् कलङ्को भवति । अत एव विदेशिना राज्यस्थापनायाः पश्चात् कतिपयवर्षानन्तरमेव देशवासिनां हृदये स्वाधीनताया भावः समुदियाय[9] तदर्थं च शनैः शनैः समुद्योग आरब्धः । राष्ट्रियमहासभायाः कृते जनतया विपुलरूपेण आन्दोलनं चालितम् । महता उत्साहेन च असङ्ख्या नरा नार्यश्च अस्मिन् स्वातन्त्र्य सङ्ग्रामे आत्मसमर्पणं चक्रुः । यद्यपि अस्य आन्दोलनस्य निर्मूलनाय वैदेशिकैः विविधा उपाया विहिताः । सभासम्मेलनादीनि अवरुद्धानि, जनताया भयङ्करं दमनं कृतम्, नेतारो मुहुर्मुहुः कारागारे बद्धाः, सहस्रसहस्र-युवानो गुलिकाभिः[10] मृत्युमुखे पातिताः, धनानि लुण्ठितानि, गृहाणि प्रज्वलितानि, मातरो भगिन्यश्च निर्मर्यादा कृताः, राक्षसकारिणश्च अत्याचारा अभूवन्, परं स्वतन्त्रतायै देशवासिनां हृदये जाज्वल्यमानो वह्निः उपशमितो न बभूव । सर्वाणि कष्टानि सर्वविधान् च अत्याचारान् सहमाना अस्मदीया देशवासिनो नेतारश्च कदाचिदपि अस्मात्

---

९—उत्पन्न हुआ । १०—गोलियों से ।

भाग्येनैव सर्व भवति। व्यर्थमेव जना "हाय हाय" इति कोलाहलं कुर्वाणा सन्ति। यद् भाग्ये लिखितं भविष्यति तत्तु स्वयमेव भविष्यति। का पुनः आवश्यकता तदर्थम् इतस्ततो धावनस्य? परं तेषाम् इयं धारणा युक्तियुक्ता नास्ति। नहि ईदृशेन विचारेण देशस्य लाभो भवितुमर्हति नापि समाजस्य। न च अयं सिद्धान्तः अस्माकं शास्त्रेषु एव लिखितो वर्तते। शास्त्राणि तु सर्वाण्येव उद्योगस्य महिमानं गायन्ति उद्योगपरा यणतायाश्च उपदेशं ददते। अत एव नीतिकाराः —

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी
दैवेन देयमिति कापुरुषा वदन्ति।

इत्यादिभिः श्लोकैः उद्योगप्रशंसां दैववादस्य च निन्दां कुर्वन्ति। उद्योगेनैव आत्मनो देशस्य वा कल्याणं कर्तुं शक्यते। उद्योगबलादेव सम्प्रति अमेरिका-रूस प्रभृतयो देशाः सर्वप्रकारेण धनधान्यसम्पन्ना: सन्तो जगति सर्वश्रेष्ठतां गताः सन्ति। अतो यदि जनाः सुखेन जीवितुं वाञ्छयुः तर्हि सर्वैरेव भाग्यवादं दूरे निक्षिप्य आलस्यं च सर्वथा विहाय उद्योगपरायणैः भवितव्यम् उद्योगदेवस्य च शरणे समागन्तव्यम्।

---

## शिष्टाचारः।

सुशिक्षिताः सभ्याः सदाचार-सम्पन्नाश्च जनाः 'शिष्टाः' इति कथ्यन्ते। तेषामयं आचारः-व्यवहारः — शिष्टाचार इति पदेन व्यवह्रियते। अर्थात् शिष्टजनाः गमने आगमने, उत्थाने उपवेशने, शयने जागरणे, आदाने प्रदाने, भोजने पाने, आलापे संलापे, प्रश्न समाधाने, हास परिहासे, हर्षे विषादे, सम्पत्तौ विपत्तौ, आमोद प्रमोदे, वादे

प्रतिवादे, मेलौ कुतूहले, घाते प्रतिघाते, जये पराजये, अनुरागे विरागे, उत्कर्षे अपकर्षे, पुरस्कारे तिरस्कारे, उपकारे अपकारे, प्रणामे आशीर्वादे, पुरीषे[1] प्रस्रावे[2], तथा अन्येषु च लघुषु महत्सु वा कार्येषु यथा आचरन्ति यथा च व्यवहरन्ति स एव आचारो व्यवहारश्च शिष्टाचार इति उच्यते।

सुख सम्मान-पूर्वकं स्वकीय जीवनं यापयितुं[3] शिष्टाचार-पालनस्य अतीव आवश्यकता भवति। ये जनाः शिष्टाचार-विरुद्धम् आचरन्ति, उचितं करोमि अनुचितं वा इति विषये ध्यानं न ददते, युक्ताऽयुक्त-विवेकं विहाय यथेच्छं व्यवहरन्ति। ते सभ्य समाजे कुत्रापि समादरं न लभन्ते। एतादृशेषु जनेषु स्वकीया अथवा सर्वे एव जना घृणां कुर्वन्ति, सर्वे एव निन्दन्ति, सर्वे एव च तेषाम् असहयोगं कुर्वन्ति। एतद्विपरीत ये जनाः शिष्टाचारानुसारं सर्वदा आचरन्ति, उचिताऽनुचिते विचार्य व्यवहरन्ति ते शिष्टसमाजे सदैव सम्मानं प्राप्नुवन्ति सर्वत्रैव च समाद्रियन्ते। ते सर्वे अपि समाजेषु सादरम् आहूयन्ते[4]। नरो नारी, बालको वृद्धो, ब्राह्मणः चाण्डालो वा सर्वे एव गृहे बहिर्वा शिष्टजनसम्मतेन व्यवहारेणैव समाजे सम्मानयोग्या भवन्ति न अन्यथा। अतः सर्वैरेव नरैः नारीभिर्वा शिष्टाचाराऽनुकूल एव व्यवहारः कर्तव्यो येन समाजे सुख-सम्मान पूर्वकं जीवनं यापयितुं शक्येत।

समाजे बहवो जना अनेकानि शिष्टाचार विरुद्धानि कार्याणि कुर्वन्ति। बहूनां निरर्थकमेव गालि प्रदानस्य अभ्यासो भवति। ते साधारणे वार्तालापे हासे परिहासे च पदे पदे उद्वेगजनकान् अपशब्दान् उच्चारयन्ति। बहवो यत्रैव भुञ्जते तत्रैव गण्डूषादिकं[5] कुर्वते। अनेके आज्ञां विनापि परवस्तूनि गृह्णन्ति। न च पुनः प्रेरणां विना पुनः परावर्तयन्ति[6]। केचन

---

१—शौच में। २—पेशाब करने में। ३—बिताने के लिये।
४—बुलाये जाते हैं। ५—कुल्ला वगैरह। ६—लौटाते हैं।

यत्रैव उपविशन्ति तत्रैव परितः ष्ठीवन्ति[7]। बहवो गुरुजनानामपि समक्षम् उच्चैर्हसन्ति, उच्चैर्जल्पन्ति, उद्धतं[8] च व्यवहारं कुर्वन्ति। केचन कार्याभावे अङ्गुल्या नासिकामेव निष्कुष्णन्तः[9] तिष्ठन्ति। कियन्तः प्रयोजनं विनापि परस्परं संलपतो: द्वयोर्मध्ये उपतिष्ठन्ति। बहवः चलन्तोऽपि खादन्ति, उत्तिष्ठन्तोऽपि पिबन्ति, भक्षयन्तोऽपि बहु वृथा जल्पन्ति। अपरे विस्तृतेऽपि मार्गे अपरान् धक्कयन्तो मर्दयन्तः आघ्नन्तश्च[10] गमनं कुर्वन्ति। बहवः अप्रक्षालितौ अपि पादौ अन्यस्य आसने धरन्ति, अनावृतमुखा एव जृम्भन्ते[11] छिक्कन्ति च, धूमवीटिकां[12] च पीत्वा सम्मुखमेव धूममुत्सृजन्ति। केचन असमये गायन्ति, असमये रुदन्ति, असमये च वार्तालापं कुर्वन्ति। कियतः अनाचारान् गणयामः ? ईदृशा एव अनेके शिष्टाचार-विरुद्धा व्यवहाराः चलन्ति। मम येन आचरणेन कस्य किं कष्टं जायते इति स्वप्नेऽपि न विचारयन्ति।

न च इमे दोषाः केवलम् अशिक्षितेषु एव वर्तन्ते। शिक्षिता अपि बहवो दुरभ्यासात् अनवधानात्[13] अज्ञानात् वा शिष्टाचार-विरुद्धानि बहूनि कर्माणि कुर्वन्तो दृष्टिपथं गच्छन्ति। "स्कूल-कालेज" वीनां छात्रेषु तु बाहुल्येन इमे दोषा उपलभ्यन्ते। भोजन पानादौ असंयमः, गुरुजनेषु अपि अविनयः, उच्छृङ्खला व्यवहाराः, धर्षीभूय यस्य कस्यापि परिहासकरणम्, छात्रीभिः सह बीभत्सा व्यवहारश्चेति साधारणं कार्यं वर्तते। मार्गे यत्किमपि आदाय भक्षयन्तः, शिक्षकैः सह विवादं कुर्वन्तः, कदाचित् गालिप्रदानं कदाचित् च प्रहारमपि कुर्वाणाः, अन्यान् गता-ध्नान् अपि हसन्तः, निरर्थकमेव अट्टहासं कुर्वन्तः, अकारणमपि केनापि सह सद्धीभूय विवदमानाश्च ते आत्मनो महत्त्वं मन्यन्ते। एवं शिक्षितेषु

---

७—थूकते हैं। ८—उद्दण्डतापूर्ण। ९—निखोरते हुए। १०—चोट पहुचाते हुए। ११—जैंभाई लेते हैं। १२—बीड़ी। १३—असावधानी से।

अशिक्षितेषु वा सर्वत्रैव अशिष्टजनोचिता अनेके व्यवहारा अहर्निशं चलोक्यन्ते अस्माभिः। यस्य कस्यापि भवन्तु, परम् ईदृशा व्यवहाराः सर्वेषामपि कृते अप्रिया अरुचिकरा उद्वेगजनका क्लेशकराश्च भवन्ति। अतः शिष्टाचाराऽनुकूलमेव सदा व्यवहर्तव्यमस्माभिः न तु तद्विपरीतम्।

अनेनैव कारणेन अस्माकं शास्त्रेषु शिष्टाचारस्य विस्तरेण उपदेशः कृतो वर्तते। सर्वेषु अपि धर्मग्रन्थेषु एकैकस्मिन् प्रकरणे "सदाचार" नाम्ना "सद्वृत्त" नाम्ना वा शिष्टाचाराणाम् अतीव रमणीयं वर्णनं मिलति। पाठकानां हिताय अत्र चरक संहितायाः सद्वृत्ताध्यायस्य कानिचित् वाक्यानि वयम् अधस्तात्[१४] उल्लिखामः। तद् यथा—

"न अनृतं ब्रूयात्, न अन्यस्वम् आददीत, न अन्यस्त्रियम् अभिलषेत् न अन्यश्रियम्, न वैरं रोचयेत्, न कुर्यात् पापम्, न पापेऽपि पापी स्यात्, न अन्यदोषान् ब्रूयात्, न अन्यरहस्यम् आगमयेत्, न अधार्मिकैः न नरेन्द्रद्विष्टैः सह आसीत, न उच्चैर्हसेत्,न शब्दवन्तं मारुतं मुञ्चेत्,न अनावृतमुखो जृम्भां क्षवथुं[१५] हास्यं वा प्रवर्तयेत्, न नासिकां कुष्णीयात्, न दन्तान् विघट्टयेत्, न नखान् वादयेत्, न अस्थीनि अभिहन्यात्, न भूमिं विलिखेत्, न छिन्द्यात् तृणम्, न लोष्ठं मृद्गीयात्, न विगुणम् अङ्गैश्चेष्टेत, न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत, न उत्तमैः विरुद्ध्येत, न अवरान् उपासीत, न जिह्मं रोचयेत्, न अनार्यम् आश्रयेत्, न भयम् उत्पादयेत्।"

"न अति समयं जह्यात्, न नियमं भिन्द्यात्, न नक्तं अदेशे चरेत्, न सन्ध्यासु अभ्यवहाराऽध्ययनस्त्रीस्वप्नसेवी स्यात्, न बाल-वृद्ध-लुब्ध-मूर्ख-क्लिष्ट-क्लीवैः सह सख्यं कुर्यात्, न मद्य-द्यूत वेश्याप्रसङ्ग-रुचिः स्यात्, न गुह्यं विवृणुयात्, न कञ्चित्

१४—नीचे। १५—छींक।

अवजानीयात्, न अहम्मानी स्यात्, न अदक्षः नादक्षिणो नाऽसूयकः, न ब्राह्मणान् परिवदेत्, न वृद्धान् न गुरून् न गणान् न नृपान् वा अधिक्षिपेत्, न च अतिब्रूयात्।

न कार्यकालम् अतिपातयेत, न अपरीक्षितम् अभिनिविशेत्, न इन्द्रियवशगः स्यात्, च चञ्चल मनः अनुभ्रामयेत्, न बुद्धीन्द्रियाणाम् अतिभारम् आदध्यात्, न च अतिदीर्घसूत्री स्यात्। इति"

आत्मनः प्रतिकूलानि परेषां न समाचरेत्।

(महाभारतम्)

पन्था देयो ब्राह्मणाय गवे राज्ञे ह्यचक्षुषे।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च॥

(बौधायनधर्मसूत्रम्)

पश्यन्तु, कीदृशा मानवमात्रस्य अशेषकल्याणसाधका अमूल्ना उपदेशा इमे सन्ति। यदि ईदृशः सर्वाङ्गसुन्दरो निखिलजनमनोहरः उभयत्र च अमित हित करो व्यवहारः स्यात् तदा सर्वेषां सदा सामाजिक जीवन सर्वथा सुखमय स्वास्थ्यमयं सम्मानमयञ्च भवेत्। अत शिष्टजनानां सङ्गेन, गुरुजनानाम् उपदेशेन, एतद्विषयकानाम् पुस्तकानां पठनेन च तथा स्वकीय अभ्यासः कर्तव्यो यथा एकमपि कार्यं शिष्टाचारविरुद्धं न जायेत। तत एव वयमपि समाजे शिष्टजनोचित समादरं लब्धुं समर्था भविष्यामः।

---

# ईश्वर-भक्तिः।

मनुष्याणां सांसारिक-सुखलाभाय यथा धनादीनां सुखसाधनानाम् आवश्यकता अस्ति तथैव आध्यात्मिक सुखलाभाय ईश्वराऽराधनस्यापि

आवश्यकता अस्ति। अथवा यथा ज्वरादिरोगाणां विनाशाय औषधानाम् आवश्यकता भवति तथैव जनन मरणादि रोगाणां नाशाय ईश्वराराधन-स्यापि प्रयोजनं भवति। मानवजाते लौकिकस्य वा कल्याणस्य सिद्धये शास्त्रेषु यावन्ति कर्माणि निर्दिष्टानि सन्ति तेषु ईश्वराऽराधनं मुख्यतमं कर्म अस्ति। सर्वे वेदा, सर्वाणि शास्त्राणि, सर्वा उपनिषद, अथवा समस्तमेव आर्यसाहित्यं मानवकल्याणाय ईश्वराराधनस्य महतीम् आवश्यकता प्रतिपादयति। नरो भवेत् नारी वा, ब्राह्मणो भवेत् चाण्डालो वा, महापण्डितो भवेत् मूर्खो वा, सर्वैरेव स्वशक्त्यनुसारं प्रतिदिनं नियमपूर्वकं येन केनापि प्रकारेण ईश्वराराधनं कर्तव्यम्।

ईश्वराराधनेन अनेके लाभा सन्ति। प्रतिदिनं नियमेन यदि ईश्वराराधनं विधीयेत तर्हि मनःशान्तिः, चित्तैकाग्रता, धर्मबुद्धि, आत्मिकशक्तिवृद्धि, इन्द्रियसंयमश्चेति बहवो लाभा भवन्ति। ईश्वराराधनेनैव जनन मरणादिना मुक्तो भूत्वा मानवो मोक्षमपि लब्धुं शक्नोति। जगतो दैनिककालात् आनन्दात् परमानन्द सागरे अवगाहनं कर्तुं शक्नोति। आराधनेनैव यः कोऽपि नरो नारी वा ब्राह्मण शूद्रो वा आत्मनो जीवनस्य अन्तिमम् उद्देश्यं पूरयितुं शक्नोति। ईश्वराऽरा-धनेनैव अतीतकालस्य वर्तमानकालस्य च अनेके मानवा जनन-मरण-बन्धनात् मुक्तिपदं प्रापुः। अत अन्यानि सर्वाण्यपि कार्याणि कुर्वद्भि अस्माभिः सदैव दैनिकरूपेण ईश्वरोपासना अपि कर्तव्या एव।

अन्यच्च ईश्वरेण अनन्ता उपकारा कृता अस्मासु। ईश्वरस्यैव कृपया वयं तथाभूतं मानवशरीरं लब्धवन्तः यं यस्य सुरा अपि कामना कुर्वन्ति। यदि ईदृश सर्वाङ्गपूर्णं सकलसाधना मूलम् अमूल्यं शरीरं न अभिलिष्यत् तर्हि कथमिव वयं सांसारिक सुखं भोक्तुं समर्था अभविष्याम कथं च वा साधनाऽराधनाभ्यां मोक्षरूपं परमं पदं प्राप्तुं अवसरम् अल-प्स्यामहे। अस्माकं रक्षायै हिताय च परमेश्वरेण ये ये उपाया विहिता यानि यानि च वस्तूनि उत्पादितानि तदपि सर्वम् अवर्णनीयमेव अस्ति।

स एव अस्माकं गर्भे रक्षां करोति। जननानन्तरं च स एव मातुस्तनौ पूरयित्वा अस्माकं जीवनोपायं कुरुते। अस्माकमेव भोजनाय तेन नानाविधानि अन्नानि फलमूलादीनि च सृष्टानि। रोगे सति तस्य विनाशाय विविधा औषधयोऽपि तेनैव सृष्टाः। सूर्ये सन्तापः, शशाङ्के[1] ज्योत्स्ना[2], अग्नौ दाहः, जले शीतलता, भूमौ उत्पादनशक्तिश्च अस्माकमेव कार्यसाधनाय भगवता विनिर्मिता। इमानि सर्वाणि सुख साधनानि उत्पाद्य स अस्मभ्यम् एतादृशीम् एकाम् बुद्धिं दत्तवान् यस्या महीतले क्वाचित् तुलना नास्ति। बुद्धिरेव तद् वस्तु विद्यते येन वयं समस्तायामपि सृष्टौ श्रेष्ठतां भजामहे। बुद्धेरेव बलात् स्वल्पकायाः स्वल्पबलाश्च वयं महाकायं गजं महाबलवन्तं सिंहं च वशीकर्तुं पारयामः। बुद्धेरेव अयं परिणामो वर्तते यत् मानवाः संसारस्य विशालतमे रङ्गमञ्चे प्रकृतिनटीं यथा इच्छन्ति तथा नर्तयन्ति। यत् खलु इदानीं जना द्वितीय ईश्वर इव जले स्थले आकाशे वा यथेच्छं गच्छन्ति, नवनवां सृष्टिं कुर्वन्ति, कर्तुं अकर्तुं अन्यथाकर्तुं च सामर्थ्यं भजन्ते तत् कस्य प्रभावात् ? बुद्धेरेव। ततश्च यः खलु ईदृशीं सकलकार्यसाधिकां कल्पवृक्षोपमां बुद्धिं दत्त्वा अस्माकं महतो महान्तमुपकारं कृतवान् तस्य यदि कदाचित् अस्माभिः आराधना न क्रियते, यदि चास्य कृतज्ञतापूर्वकं स्मरणं न विधीयते, यदि च तस्य अनन्तान् उपकारान् स्मारं स्मारं वयं श्रद्धया अवनतमस्तका न भवामः तदा कीदृशाः कृतघ्ना वयं भविष्यामः कां च गतिं लप्स्यामहे इति सर्वैरेव विचारणीयं मनसि। कर्तारं विनैव एतत् सर्वं समुत्पन्नमिति कथनं तु सर्वथा बुद्धिविपरीतं युक्तिरहितं च अस्ति। अतो यथाशक्ति सर्वैरेव मानवैः ईश्वराराधनं कर्तव्यम्।

*अथ ईश्वराराधनस्य साधारणतः त्रयो मार्गाः सन्ति। भक्तिः*, स्वकर्तव्यपालनम्, अन्यैः सह सद्व्यवहारश्च। तेषु भक्तिः नवविधा शास्त्रेषु वर्णिता वर्तते। यथा—

१—चन्द्रमा में। २—चाँदनी।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥

एभिः श्रवणादिभिः कार्यैः ईश्वराराधनं सर्वैरेव यथाशक्ति कर्तुं शक्यते। यद्यपि शास्त्रेषु निर्गुणोपासनादयः अन्येऽपि अनेके मार्गा निर्दिष्टाः सन्ति परं ते अतीव कठिना असाध्याश्च वर्तन्ते। अत एव भगवता श्रीकृष्णेन भगवद्गीतायां प्रतिपादितं यत्—

क्लेशोऽधिकतरस्तेषाम् अव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥

स्वकर्तव्यपालनञ्च ईश्वराराधनस्य द्वितीयो मार्गः अस्ति। वर्णाश्रमधर्मानुसारं यस्य यत् कर्म शास्त्रेषु निर्दिष्टं वर्तते तस्य यथावत् सम्पादनम् अपि ईश्वरस्य आराधनायाः प्रसन्नतायाश्च परमं साधनम् अस्ति। यदि कश्चित् पुरुषः स्ववर्णाश्रमधर्मानुसारं कार्याणि न कुरुते तद्विपरीतं वा आचरति तदा तस्य श्रवणेन कीर्तनेन वा भगवान् प्रसन्नो भवितुं नार्हति। यदि कश्चित् ब्राह्मणः शूद्रकर्माणि कुरुते, सन्यासी साधुः 'महन्तो' वा कश्चित् यम नियमादिसाधना-रहितो गृहस्थवत् कामिनीकाञ्चनादिषु आसक्तो भवति तर्हि तस्य आक्रन्दनेनापि[3] भगवान् प्रसन्नो न भवति। बहवो जनाः वेषनिर्माणेन नामकीर्तनादिना च आत्मानं महान्तं भक्तं मन्यन्ते। रामनामाङ्कितं वस्त्रं धारयन्ति, गले अनेकशः कण्ठमालिकाः परिदधते,[4] सम्पूर्णमपि शरीरं भस्मना लेपयन्ति, विविधाकारैः चन्दनैः ललाटं भूषयन्ति, आपादलम्बिनीं जटां बिभ्रति,[5] सदैव च करमालिकां हस्ते धारयन्तो जनान्तश्च इतस्ततो भ्रमन्ति, अहर्निशं कीर्तनं कुर्वते गायन्ति नृत्यन्ति च। एतैरेव ते आत्मानं भगवद्भक्तं मन्यन्ते सर्वतश्च प्रशंसां लब्धुमिच्छन्ति। को नाम मदीयो वर्णः? को नाम आश्रमः? कोऽहम्? किञ्च मे कर्तव्यम्? इत्यादि ते विचारं न

३—चिल्लाने से भी। ४—पहनते हैं। ५—धारण करते हैं।

कुर्वन्ति। परन्तु अयम् ईश्वराराधनस्य मार्गो नास्ति। अत एव श्रीमद् भागवते लिखित वर्तते यत्—

वर्णाश्रमाचारवता पुरुषेण परः पुमान्।
हरिराराध्यते पन्था नान्यस्तत्तोषकारणम्॥

अत कीर्तनभजनादिना सहैव स्वकर्तव्यपालनस्य उपरि पूर्णरूपण ध्यान दातव्यम्। यद्यपि इदानीं वर्णाश्रमव्यवस्था शिथिलता गता वर्तते तथापि यस्य यत्कर्म अवश्यकर्तव्य वर्तते तत्तु कर्तव्यमेव।

एतदतिरिक्त सर्वै सह सद्व्यवहारो विश्वबन्धुत्वञ्चापि भगवदाराधनस्य सर्वधर्मसम्मत श्रेष्ठतमश्च मार्गो वर्तते। स्मरणकीर्तनादिना भक्ति कुर्वन्नपि तथा स्वकर्तव्य पालयन्नपि यदि कश्चित् अन्यै प्राणिभि सह सद्व्यवहार न करोति न च तेषु भ्रातृबुद्धिं भजते तर्हि स उत्तमो भगवद्भक्तो न भवितुम् अर्हति। शास्त्रेषु सर्वोत्तमो भगवद्भक्त स एव मतो[६] वर्तते य सर्वानपि प्राणिनो भगवत पुत्रान् मत्वा सर्वै सह समुचित व्यवहार कुरुते सर्वाश्च भ्रातृवत् मन्यते। य अन्येषा सुखे सुखितो भवति, अन्येषा दुःखे दु खितो भवति, सकटे साहाय्य कुरुते, विपदो निवारयति, स एव भगवता स्वकीय सर्वश्रेष्ठो भक्त मतो वर्तते। एतद्विपरीत यदि कश्चित् सर्वमपि कीर्तनभजनादिक कुर्वाणोऽपि परेषा हर्ष विषीदति,[७] विषादे हृष्यति,[८] सहायताऽवसरे अपसरति,[९] विपत्तौ पलायते, धनम् अपहरति, वञ्चना कुरुते, असत्य वदति, निष्ठुर भाषते, दुराचरण करोति, अकारण कुपित तिष्ठति, स्वार्थ साधयति परार्थ च नाशयति तर्हि न तस्य कीर्तनेन नापि केवल कर्तव्यपालनेन वा भगवान् प्रसीदति। भगवता स्वयमेव अनेकेषु अवसरेषु स्पष्ट प्रतिपादित यत् "य मदीयै सर्वैरेव पुत्रै सह सद्व्यवहार करोति, भ्रातृवत् वर्तते,

---

६—माना गया। ७—दुखी होता है। ८—खुश होता। ९—हट जाता है।

स एव मम प्रियः अस्ति स एव च मां सर्वत्र द्रष्टुं लब्धुं वा शक्नोति । अहं सर्वेषु प्राणिषु निवसामि । यदि केनापि प्राणिना सह कश्चित् दुर्व्यवहारं करोति द्वेषं वा विदधाति तदा स मम पूजया विडम्बनां करोति । तस्य पूजया अहं कदापि प्रसन्नो न भवामि । अतः तादृशो जनः कथमपि मम प्रियो भक्तो वा न भवति । यथा—

अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा ।
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥२१॥
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वाऽर्चां भजते मौढ्याद् भस्मन्येव जुहोति सः ॥२२॥
अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद् दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥

अतो भगवद्वचनाऽनुसारेणैव श्रीमद्भगवतः पूजायाः आराधनायाः उपासनाया च कथमपि महनीयतमो मार्गः अस्ति ।

एवम् इमे एव त्रयो मार्गाः ईश्वराराधनस्य सन्ति । एतानेव यथाशक्ति सम्यगनुष्ठानेन आत्मकल्याणं लोककल्याणं भगवत्प्रीतिश्च कर्तुं शक्यते । अतो यथासम्भवं मानवमात्रेण एभिः सर्वैः शास्त्रविहितैः मार्गैः भक्तजनो भगवान् यथाविधिः पूजितः प्रसादितश्च कर्तव्यः ।

---

उत्पद्यन्ते तथापि जीवनस्य उपरि संसर्गस्यापि विशेषरूपेण प्रभावः पतति। यो यादृशेन पुरुषेण सह सङ्गतिं करोति यादृशेन पुरुषेण च सह उत्तिष्ठति उपविशति, खादति पिबति, आलाप-संलापौ कुरुते तस्य तादृश एव स्वभावो भवति। सज्जनैः सह सङ्गतिः भविष्यति चेत् सज्जनता आगमिष्यति, दुर्जनैः सह सङ्गतिः भविष्यति चेत् दुर्जनता। अत एव नीतिकाराः कथयन्ति—

संसर्गजा दोषगुणा भवन्ति।

व्यावहारिके जीवने नहि एकोऽपि जनो जगति एकाकी निवसितुं शक्नोति। जीवने सर्वत्रापि बहुत्र गमनस्य, बहुभिः सह मिलनस्य, अनेकैः परिचिताऽपरिचितैः सह कार्यकरणस्य आवश्यकता भवत्येव। एषु प्रसङ्गेषु प्रायशः अनेके सज्जना अपि मिलन्ति दुर्जनाश्च। परं संसर्गस्य गुणदोषौ विचार्य स्वकल्याणं कामयमानेन पुरुषेण सदैव सज्जनपुरुषाणामेव सङ्गतिः कर्तव्या न तु समीपेऽपि कदाचित् दुर्जनानां गन्तव्यम्। दुर्जनानां संसर्गो हि बहूनाम् अनर्थ-परम्पराणाम् उत्पादको भवति। दुर्जनैः सह संसर्गेण विशुद्धा अपि बुद्धिः मलिनताम् उपयाति, सच्चरित्रता नश्यति, सद्गुणा दूरीभवन्ति, सम्पदः पलायन्ते, सुहृज्जना अपरज्यन्ति,[1] कुलं कलङ्कितं भवति, सर्वत्रैव च दुर्नामता प्रसरति। ये जना दुर्जनैः सह वसन्ति दुर्जनैश्च सह व्यवहरन्ति ते पदे पदे आत्मानम् अधः पातयन्ति। असत्सङ्गो नाम तादृशः पङ्किल पन्था अस्ति यदुपरि चलनेन स्खलनस्य,[2] पतनस्य, कलङ्कपङ्क लगनस्य च पदे पदे भयं तिष्ठति। असत्सङ्गात् जना अविश्वासभाजनानि भवन्ति सर्वत्रैव च अपमानिता बहिष्कृता निन्दिता धिक्कृताश्च जायन्ते। यद्यपि बहवः ईदृशा अपि सुदृढसंस्कारा जना भवन्ति येषामुपरि असत्सङ्गस्य कश्चित् प्रभावो न पतति तथापि साधारणलोकाः तेषामपि उपरि

---

१—नाराज हो जाते हैं। २—फिसलने का।

आशङ्का कुर्वन्ति एव। यथा अचौरोऽपि जनः चौरैः सह गच्छन् जनैः रक्षापुरुषैश्च चौर इति आशङ्क्यते तथैव सज्जना अपि असत्सङ्गात् समाजे असज्जना एव मन्यन्ते। असत्सङ्गेन च स्वभावो यदा एकवार दूषितो भवति तदा शतशत प्रयत्नकरणेनापि स सुगमतया न अपयाति[3]। अतो बुद्धिमता पुरुषेण दुर्जनैः दुराचारिभिः अनृतभाषिभिः परदारलम्पटैः दुःशीलैः असभ्यैः अपहरणशीलैः अविवेकिभिश्च जनैः सह कदापि सङ्गतिः न विधेया। विशेषतः स्वकीया बालका यथा दुर्जनानां दुष्टबालकाना च संसर्गं न गच्छेयुः तथा प्रयत्नः कर्तव्य। यतो हि बाल्यकाले यादृशः संस्कारो जायते स एव सुदृढो भवति। महता प्रयत्नेन च तस्य परिवर्तनम् असम्भव भवति। अतो बाल्यकाले एव अस्य विषयस्योपरि विशेषसावधानताया आवश्यकता भवति। अत एव नीतिकाराः कथयन्ति—

नव हि द्रव्यं येन येन अर्थजातेन उपदिह्यते[4] तत्तत् आचूषति[5]।
[ कौटलीय अर्थशास्त्र १-१६ ]

अपिच यथा दुर्जनाना संसर्गेण अनेकविधा हानयो भवन्ति तथैव असद्ग्रन्थाना पठनेन, असच्चित्राणां दर्शनेन, असद्वार्ताना श्रवणेन च विविधा हानयो जायन्ते। एवम्विधानि पुस्तकानि प्रकाशितानि सन्ति येषा पठनेन मनसि नानाविधा विकारा असद्विचाराश्च उत्पद्यन्ते। एतादृशानि पुस्तकान्यपि चरित्रनिर्माणे तथैव बाधकानि भवन्ति यथा असज्जनाना सङ्गतिः। अनेके नवयुवानः आदौ मातापितृभ्यो गोपायित्वा[6] ईदृशानि पुस्तकानि पठन्ति। परं यदा तेषा मनसः उपरि एतादृशपुस्तकानां कुप्रभावः पतति तदा ते पश्चात्ताप कुर्वन्ति। अत आरम्भकालादेव दुर्जनवत् एतादृशानि पुस्तकान्यपि परिहर्तव्यानि।

---

३—दूर होता है। ४—लीपा जाता है। ५—चूस लेता है, ग्रहण कर लेता है। ६—छिपा कर।

ईदृशानि च पुस्तकानि पठनीयानि येन मनसि सदैव सद्भावानां सद्विचाराणां च समुदयो भवेत् चरित्र-निर्माणे च साहाय्यं मिलेत्। विद्यार्थिभिस्तु अस्मिन् विषये सदैव सावधानतया स्थातव्यम्।

असद्ग्रन्थवत् असच्चित्राणामपि दर्शनं सर्वथा वर्जनीयम्। दर्शकानां मानसपटले चारुचित्राणां यथा अद्भुतः प्रभावः पतति न तथा अन्येषाम्। रमणीयानि चित्राणि झटित्येव मनोमोहनानि हृदयाकर्षकाणि च भवन्ति। अपरिपक्वबुद्धीनाम् अल्पवयस्कानां बालकानां तु तान्यपि विशेषरूपेण। इदं सर्वं सर्वदैव प्रत्यक्षम् अनुभवामो यत् यादृशानि चित्राणि भवन्ति तादृशा एव भावा मनसि उद्भवन्ति। वीरपुरुषाणां चित्रावलोकनेन दुर्बलस्यापि हृदये वीरतायाः भावना जागर्ति, शृङ्गाररस-चित्राणां दर्शनेन च वीराणामपि हृदये सद्यः कामविकारा उत्पद्यन्ते। अत एव युद्धकाले सैनिकानां हृदये वीरभावोत्पादनार्थम् उत्साहवर्धनार्थं च युद्धसम्बन्धीनि चित्राणि प्रकाश्य परितः प्रदर्श्यन्ते। अतः स्वकीये निवासगृहे शयनागारे अध्ययनागारे उपवेशनशालायां[७] गोष्ठीपर्वे सार्वजनिकेषु च स्थानेषु तादृशानि चित्राणि भित्तिषु[८] लगनीयानि येषां दर्शनेन मनसि वीरतायाः करुणायाः भक्तेः राष्ट्रसेवायाः उपकारस्य प्रीतेः धर्मस्य च शुभा भावनाः उत्पद्येरन्।

एवमेव असद्वार्तानाम् असद्गीतानाञ्च श्रवणात् सर्वदा दूरे स्थातव्यम्। यत्र असभ्यजना नरा नार्यो वा असद्वार्ताः कुर्वाणाः स्युः नर्तकाश्च भ्रष्टभावभरितानि असद्गीतानि गायन्तो भवेयुः तत्र क्षणमात्रमपि न गन्तव्यं न च किञ्चित् श्रोतव्यम्। एतेनापि मनसि नानाविधा विकारा गर्हिताश्च भावा उत्पद्यन्ते। समयस्य यः अपव्ययो भवति स तु भवत्येव।

एवञ्च असत्पुरुषाणां असद्ग्रन्थानां असच्चित्राणां असद्वार्तानां असद्गीतानां च विनाशकारिण्याः संगतेः यथाशक्ति आत्मानं रक्षन्तो

---

७—बैठके में। ८—दीवाली पर। ९—उचित है।

चालकबालिकाश्च रक्षित्वा सत्पुरुषाणां संसर्गाय, सद्ग्रन्थानां पठनाय, सच्चित्राणां दर्शनाय, सद्वार्तागीतादीनां च श्रवणाय प्रयतनीयं पुरुषेण एभि उपायै सर्वेऽपि मानवा आत्मानं सम्यक् प्रकारेण उन्नमयितुं शक्नुवन्ति। एषु सज्जनानां संसर्गस्तु मर्त्यलोकस्य कल्पतरुः एवास्ति। अत एव भर्तृहरिणा नीतिशतके एकत्र लिखितं वर्तते यत्—

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
कीर्तिं तनोति वितनोति च दिक्षु लक्ष्मीं
सत्सङ्गतिः कथय किं न करोति पुंसाम्॥

अस्य श्लोकस्य एकैकानि अक्षराणि सर्वथा सत्यभूतानि सन्ति। सत्सङ्गेन विद्या बुद्धिः विवेक भक्ति श्रद्धा सद्भावना सद्विचार' शान्तिः सौजन्यं चेत्यादयो गुणा एककालमेव मनुष्ये प्रादुर्भवन्ति। सत्सङ्गो हि एतादृश सोपानमस्ति यद्द्वारा उन्नतोन्नते अपि पदे जना निर्भयं आरोढुं शक्नुवन्ति। अत एव शास्त्रेषु सत्सङ्गस्य अतीव महत्त्वं वर्णितं वर्तते। भगवान् रामचन्द्रस्तु नवविधभक्ति-निरूपणे सतां सङ्गतिमेव प्रथम भक्ति-साधनमाह—"प्रथम भक्ति सन्तन कर संगा।" अतो यथाशक्ति सत्पुरुषाणामेव सङ्गतिः कर्तव्या। कार्यकारणवशात् अनेके जनाः प्रतिदिन मिलन्ति सर्वैश्च यथाऽवसर वार्तालापादिकं कर्तव्यमेव भवति परं तेषु कस्य कीदृशं चरित्रं, कीदृशः स्वभावः, कीदृशा विचाराः, कीदृशी च मनोवृत्तिः इति सर्वं सम्यक् परीक्ष्यैव तेनापि सह संसर्गः स्थापनीयः।

ऐतिहासिककथानां पठनेन वयं सम्यगवगच्छामो यत् सत्सङ्गप्रभावात् कीदृशाः कीदृशा निन्दिताचरणा अपि जना महापुरुषाणां पदं प्रापुः। आदिमहाकाव्य-प्रणेता महामुनिः वाल्मीकिः सत्सङ्ग प्रभावादेव जीवहिंसादिकं विहाय ईदृशं जगद्वरेण्यं पदं लब्धवान् इति प्रायः सर्वे एव जानन्ति। सत्सङ्गस्यैव च अयं प्रभाव आसीत् यत् भिल्लजातीया अकिञ्चना नारी शबरी साधनारहिताऽपि भगवतो रामचन्द्रस्य साक्षा-

द्दर्शनम् आतिथ्यं च कृत्वा निजजीवनं सफलीचकार। एवं बहूनि उदाहरणानि सन्ति।

यद्यपि असज्जनबहुले अस्मिन् युगे सज्जनाना प्रायेण सर्वत्र अभाव एव दृष्टिगोचरीभवति। सज्जन-दुर्जनयोः अभिज्ञान[1] साम्प्रतं नितान्तमेव कठिनं जातं वर्तते। सज्जन वेषधारिणोऽपि जना बाहुल्येन हृदयेन असज्जना एव वर्तन्ते। तथापि यथासम्भवं सज्जनानाम् एव संगतिः कर्तव्या येन सर्वविधं कल्याणं सम्पद्येत।

---

# विद्यार्थिनां कर्तव्यम्

आर्यधर्मानुसारं मानवजीवनं चतुर्षु आश्रमेषु विभक्तं वर्तते। ब्रह्मचर्याश्रमे गृहस्थाश्रमे वानप्रस्थाश्रमे सन्यासाश्रमे च। एषु यः प्रथमो ब्रह्मचर्याश्रमकालो वर्तते तस्य विद्याध्ययनं मुख्यं कर्म अस्ति। अस्मिन् एव काले जनाना विद्यार्थिजीवनं व्यत्येति। अर्थात् जन्मनः पञ्चमवर्षादारभ्य द्वाविंश[2]-चतुर्विंश[3]-वर्षपर्यन्तम् अथवा उपनयनकालादारभ्य समावर्तनकालपर्यन्तं यावान् कालो विद्याध्ययने याति तावत् जना विद्यार्थिनः छात्रा वा मन्यन्ते तेषां जीवनं च विद्यार्थिजीवनं छात्रजीवनं वा उच्यते।

मानवजीवने अन्यकालापेक्षया अस्य कालस्य माहात्म्यं सर्वाधिकं वर्तते। अस्मिन्नेव समये भाविजीवनस्य कृते शक्तिसञ्चयः क्रियते। जीवनस्य सफलता असफलता वा अस्यैव कालस्य उपरि निर्भरा भवति।

---

१०-पहिचान। २-बाईसवाँ। ३-चौबीसवाँ।

ब्रह्मचर्याश्रमो हि अन्याश्रमाणां मूलभित्तिरस्ति[४]। यथा मूलभित्तौ सुदृढायां सुनिर्मितायां तदुपरि निर्मिता सौधा[५] अपि दृढा चिरस्थायिनश्च भवन्ति तथैव प्राथमिके ब्रह्मचर्याश्रमे विद्यार्थिजीवने वा सुदृढे सुसम्पन्ने सुनिर्मिते सुव्यवस्थिते च अन्यान्यपि गृहस्थाश्रमादीनि सुदृढानि सुसम्पन्नानि सुनिर्मितानि सुव्यवस्थितानि च भवन्ति। मानवानाम् इयं प्राथमिकी परीक्षा अस्ति यस्यां समुत्तीर्णो नरः अन्यास्वपि परीक्षासु सफलतां प्राप्नोति। मानवजीवनस्य विकासाय, निर्माणाय, सफलतायै सम्पूर्णतायै च ये ये गुणाः, या या साधना, यानि यानि च तत्त्वानि आवश्यकानि भवन्ति तेषां सर्वेषामपि उपार्जनस्य, साधनस्य, सम्पादनस्य संग्रहस्य च अयमेव मंगलमयः मुहूर्तः अस्ति। जीवनस्य इयं प्राभातिकी वेला यस्मै मंगलमयी अभूत् तस्य समग्रमपि जीवनं मंगलमयं भविष्यति इत्यत्र नास्ति सन्देहलेशोऽपि। अत एव अयं प्रारम्भिकः कालः समधिकः महत्वपूर्णो मन्यते सर्वैः।

एतत् सर्वं विचार्य मानवसमाजस्य आदि पथ प्रदर्शकैः विद्वद्भिः अस्माकम् ऋषिमहर्षिभिः अस्य आरम्भिकजीवनस्य कृते यानि यानि कार्याणि निर्दिष्टानि[६] ये ये च नियमोपनियमा निर्मिताः तेषामनुष्ठानं विद्यार्थिनां कृते नितान्तम् आवश्यकं वर्तते। प्रधानतया चत्वारि कार्याणि विद्यार्थिनां कृते परमावश्यकानि सन्ति। विद्योपार्जनम्, शारीरिक शक्ति सञ्चय, नियमितता, चरित्रनिर्माणञ्चेति। अवकाशदिनानि विहाय स्वशक्त्यनुसारं सर्वदैव विद्याभ्यासाय प्रयतितव्यम्। पाठ्यक्रमानुसारं यत् यत् पठनं लेखनं च आवश्यकं भवेत् तस्य समीचीनतया अभ्यासः कर्तव्यः। तदतिरिक्तं पुस्तकालयेभ्यो बाह्यपुस्तकानि अपि आनीय[७] ज्ञानवृद्धिः विधातव्या[८]। आलस्यं चञ्चलतां अन्यमनस्कताम् च

---

४—नींव। ५—महल। ६—बतलाये गये। ७—लाकर। ८—करनी चाहिये।

परिहाय तथा प्रयत्नः कर्तव्यो यथा पाठ्यग्रन्थानां समभ्यासे, बाह्य पुस्तकद्वारा बाह्यज्ञानसम्पादने, वक्तृत्वकलायां सुन्दरलेखने च कापि त्रुटिर्न तिष्ठेत् सर्वत्रैव सुसमीचीना योग्यता च सम्वर्धेत ।

विद्यातिरिक्त शारीरिकबलस्यापि समुपार्जने अस्मिन् एव समये पूर्णरूपेण ध्यानं दातव्यम् । वीर्यरक्षा, दैनिको व्यायामः, खेलन कूर्दनम्, प्राणायामः, दण्डमुद्गरादिचालनम्, परिश्रमश्च एतस्य साधनानि सन्ति । एतेषामनुष्ठानेन शरीरं सबलं, स्फूर्तिमत्,[९] उत्साहयुक्तं सुसङ्घटितं सुन्दरं स्वस्थञ्च तिष्ठति । यदा च शरीरं सबलं स्वस्थञ्च भवति तदैव पठनं, लेखनं, मननं चिन्तनं, कल्पना कवित्वञ्च सर्वमपि सम्यग्रूपेण भवितुमर्हति । अतो बलोपार्जनेऽपि छात्रैः सदा सावधानैः कर्तव्यपरायणैश्च भवितव्यम् । एवमेव नियमानुवर्तिता अपि विद्यार्थिनां कृते परमावश्यकं वस्तु अस्ति । प्रभाते जागरणादारभ्य रात्रौ शयनपर्यन्तं बहूनि कार्याणि कर्तव्यानि भवन्ति । परं सर्वेषामपि पृथक् पृथक् समयो भवति । यस्य कार्यस्य यः समयोऽस्ति तस्य कार्यस्य तस्मिन् एव समये करणेन समुचितो लाभो भवति । अन्यथा करणेन तु हानिरेव सम्पद्यते[१०] । शयनकाले जागरणं जागरणकाले च परिश्रमो विधीयेत[११] तर्हि स स्वस्थः न स्थातुं शक्नोति न वा अन्यान्येव कार्याणि सम्यक् सम्पादयितुं प्रभवति । अतो नियमिततायाः अपि बाल्यकालादेव अभ्यासो विधेयः । अस्मिन्नेव समये यदि समयाऽनुसारं कार्यकरणस्य अभ्यासो न भविष्यति तर्हि अग्रिममपि जीवनं अनियमितमेव भविष्यति । अतोऽस्मिन् एव समये सावधानता रक्षणीया । ब्राह्मे मुहूर्ते उत्थातव्यम् । प्रातरेव सर्वा स्नानसन्ध्यादिका नित्यक्रिया अनुष्ठेया । भोजनं, शयनं, भ्रमणं, पठनं, विश्रामश्च सर्वमपि कार्यं यथासमयं कर्तव्यम् । एवं करणेनैव समयस्य सदुपयोगो भविष्यति । इदं कार्यनियमम् अतिरिच्य[१२] विद्यार्थिनां कृते सर्वापेक्षया अधिकम्

---

९–फुर्तीला । १०–होती है । ११–किया जाय । १२–छोड़कर ।

आचरणम्, अधिक ध्यानदानयोग्यम्, अधिकहितकर च यद् वस्तु वर्तते तद् चरित्रनिर्माणम् अस्ति, सच्चरित्रता अस्ति। मातापितृभक्ति, गुरुशुश्रूषा, मान्यजनाना सम्मान, इन्द्रियसयम, अविलासिता, सत्यभाषणम्, हितभाषणम्, मितभाषणम्, मद्रता, विनय, विवेक शान्ति, सुशीलता, दया, दाक्षिण्यम्, अलोलुपता अक्रुद्रता, अचौर्यम्, च इत्यादि गुणगणै चरित्रनिर्माणं क्रियते। येषा बाल्यकाले एव चरित्र भ्रष्ट, दुश्चरित्राश्च जाता' ते आजीवन दु खिनो भविष्यन्ति अत्र कस्यापि सन्देहो न भवितुमर्हति[१३]। अतो विद्याध्ययनेन व्यायामादिना च सह अस्मिन् अपि विषये पूर्णरूपेण ध्यानदान विद्यार्थिना प्रथम कर्तव्यमस्ति। वस्तुतो विद्याध्ययनस्य इदमेव फल वर्तते। इदानीं धनार्थं जना पठन्ति। पर प्राचीनकाले चरित्रनिर्माणमेव अन्यतममुद्देश्यमासीत् विद्याध्ययनस्य। अत एव शास्त्रेषु "पण्डित" शब्दस्य इद लक्षण लिखित वर्तते यत्—

मातृवत् परदारेषु परद्रव्येषु लोष्ठवत्।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डित॥

विचारयतु स्वय मनसि। यस्य बाल्यकाले एव ईदृशी सुबुद्धि भविष्यति स जीवने कदापि कुत्सित कर्म कर्तुं शक्नोति करिष्यति वा? स किं परदारेषु दृष्टिनिक्षेपमपि कर्तुं शक्नोति? परद्रव्याणि मृत्तिका मन्यमान एक कणमपि ग्रहीतु शक्नोत? अथवा पिपीलिकामपि पीडयितुम् उत्सहिष्यते? इमान्येव सच्चरित्रताया लक्षणानि सन्ति येषा भवनेन[१४] नरो न केवल स्वपरिवारे स्वदेशे एव प्रत्युत सम्पूर्णेऽपि विश्वे स दर्शनीयो भवति। स एव सर्वोत्तमो नागरिको भवितुमर्हति। अतो विद्यार्थिभि कदापि अस्मिन् विषये असावधानता न कर्तव्या। सदैव च सद्ग्रन्थाना पठनेन, सज्जनाना सङ्गेन, सद्गुणाना चिन्तनेन सत्कर्मणामनुष्ठानेन च चरित्रनिर्माणाय प्रयतितव्यम्। इमानि एव चत्वारि छात्रजीवनस्य

---

१३—हो सकता है। १४—होने से।

प्रधानसाधनानि सन्ति येषां सम्यगनुष्ठानेन सम्पूर्णमपि जीवनं सफलं कर्तुं शक्यते।

प्राचीनभारते छात्रा बाहुल्येन एतेषामनुष्ठानं कुर्वन्ति स्म। परं तु खेदस्य लज्जायाश्च अयं विषयो वर्तते यत् साम्प्रतिका विद्यार्थिन एषु स्वकर्तव्येषु पूर्णतया ध्यानं न ददते। प्रायेण ते ज्ञानोपार्जन दृष्ट्या अध्ययनं न कुर्वन्ति परं धनार्जनं दृष्ट्या। अतो येन केनापि प्रकारेण परीक्षामुत्तीर्य प्रमाणपत्रं च लब्ध्वा इतस्ततो वृत्तिमन्वेषमाणा दृश्यन्ते। बलोपार्जनादपि ते उदासीना एव तिष्ठन्ति। प्रतिशतं द्वित्रा एव छात्रा व्यायामादिकं कुर्वाणा दृष्टिपथमायान्ति। नियमिततायाः अपि ते सदा दूरे एव तिष्ठन्ति। विद्यालये गमनं विहाय अन्यत् सर्वमपि कार्यं प्रायेण अनियमितमेव चलति। द्विवादनपर्यन्तं[१५] ते "चलचित्र" दृष्ट्वा अष्टवादनपर्यन्तं[१६] शेरते। एवमेव अन्यत्रापि। सर्वतो महान् तेषां दोषः अयं वर्तते यत् ते चरित्रनिर्माणस्य उपरि अल्पमपि ध्यानं न ददते। छात्रवर्गे दिने दिने सच्चरित्रताया अभाव एव वर्द्धमानो विलोक्यते। अजितेन्द्रियता, असंयम, अविनय, औद्धत्यम्, गुरुजनैः सह संघर्ष, विलासिता, अनास्तिक्यम्, क्षुद्रता, लम्पटता चेति दोषैस्तेषां जीवनं अतीव दूषितं मलिनतामुपगतं वर्तते। यद्यपि एतस्य अपवादभूता अपि केचन विद्यार्थिनो मिलन्ति परन्तु अधिकांश तथाविधा एव सन्ति। भारतीयछात्राणां तु कृते अयं महत्या लज्जाया विषयो वर्तते। अतः छात्रकार्यसहयोगादि संस्थाभिः छात्रैश्च तथा प्रयतनीयं यथा ते पुनरपि पूर्ववदेव ज्ञानिनो बलिनो नियमिताः सच्चरित्राश्च भूत्वा अन्यदेशीय छात्राणां पुरस्तात् परमोत्कृष्टम् आदर्शं स्थापयेयु[१७]।

वस्तुतस्तु अस्मिन् विषये केवलं विद्यार्थिन एव अपराधिनो न सन्ति। पाश्चात्यसभ्यताऽनुकारिणी शिक्षापद्धति, आदर्शहीना

---

१५—दो बजे तक। १६—आठ बजे तक। १७—स्थापित करें।

दा गच्छन्ति । धन विद्या वा, सुख सम्पत्तिर्वा, यश॰ प्रतिष्ठा वा सर्वमपि परिश्रमसाध्यमेव वर्तते । परिश्रमो नाम मनुष्यस्य महतो महत् साधन वर्तते यद्द्वारा स लघूनि महान्ति वा सर्वाणि कार्याणि सम्पाद्य[1] सुखपूर्वक जीवितु शक्नोति । भगवता ससारे सर्वाणि अपि वस्तूनि मानवसमाजस्य सुखसाधनाय एव सृष्टानि । तेभ्य साधनेभ्यो नरा न केवल आत्मानमेव प्रत्युत सपूर्णमपि जगत् मङ्गलमय कर्तुं पारयन्ति । पर न तत् केवलम् अभिलाषमात्रेण भवितुमर्हति । तत्र परिश्रमस्यावश्यकता भवति । परिश्रम कृत्वा जनो निरर्थकमपि वस्तु सार्थक कर्तुं शक्नोति । दु खदायिनापि वस्तुना सुखोपभोग कर्तु पारयति । दुर्लभादपि च दुर्लभ वस्तु सरलतया एव हस्तगत कर्तु प्रभवति । अत परिश्रम एव मानवाना कृते सर्वसौभाग्यमूलमिति सिद्ध भवति ।

इदानीं जगतीतले वय सर्वत्रैव अपारमैश्वर्य पश्याम । विभिन्नदेशाना विशालानि नगराणि, गगनचुम्बिनी[2] अट्टालिका,[3] महाकायान् यन्त्रालयान् च दृष्ट्वा मनसि महान् विस्मयो जायते ? पर किम् एतत् सर्व स्वयमेव समुत्पन्न वर्तते आकाशाद्वा भगवता पातितम् ? नहि, परिश्रमस्यैव इमा सर्वा विभूतय । बहुकालव्यापिनो बहुजनकृतस्य अश्रान्तपरिश्रमस्यैव इद सर्व फल वर्तते यत् वय अनायासेनैव सुखोपभोग कुर्म । वय रूप्यकाणि आदाय आपणे[4] गच्छामो यथेच्छञ्च विविधानि अन्नानि कन्दफलमूलशाकादींश्च आनीय गृहे सुखपूर्वक भक्षयाम । पर कियता परिश्रमेण इद सर्व समुत्पादित भवति ? अहो श्रमशीलता कष्टसहिष्णुता च कृषकाणाम् ? ते हि, माघमासस्य भयङ्कर शैत्य भवेत् ज्येष्ठमासस्य शरीरदाही सतापो वा, मुनिजना इव, सर्वमपि क्लेश सहमाना महता परिश्रमेण अन्नादिक समुपार्जयन्ति । प्रातरेव

१—सम्पन्न कर । २—आकाश को चूमनेवाली । ३—अटारियाँ । ४—बाजार में ।

हल गृहीत्वा क्षेत्रेषु गच्छन्ति, हल चालयन्ति, द्वितीया कुर्वन्ति, तृतीया कुर्वन्ति, शम्याकुर्वन्ति, बीजाकुर्वन्ति, लोष्टानि[5] भिन्दन्ति,[6] समीकुर्वन्ति शोधन च कुर्वन्ति। रात्रौ जाग्रत लुब्धके चौरे कुक्कुरशृगालादिना च क्षेत्राणि रक्षन्ति। तदनन्तर शस्यानि कृन्तन्ति, मर्दन्ति, पतो आनयन्ति, कण्डन पवनादिना[7] च निस्तुषीकुर्वन्ति। तत तत् अन्न हाटे आगच्छति यतो वयम् आदाय गृहे आनयाम। विचारयन्तु, कियान् परिश्रमो लगति ? आपणात् झटिति शर्करामादाय वय रस रचयाम पिबामश्च। पर कियता परिश्रमेण शर्करानिर्माण भवति इति ते एव जानन्ति ये कदाचित् शर्करायन्त्रालये गत्वा तत्रत्य कार्यकलाप स्वलोचनाभ्या दृष्टवन्त सन्ति। कथनस्य तात्पर्यमिद वर्तते यत् यत्कि-ञ्चित् ससारे देशत्रय वर्तते यानि वा सुखसाधनानि सन्ति तानि सर्वाणि अपि परिश्रमेणैव समुत्पादितानि सन्ति।

परिश्रमकरणेन आत्मगौरवमपि वर्द्धते समाजे च सर्वत्र सम्मानः भवति। ये स्वय परिश्रम कृत्वा जीवन्ति, समुन्नति कुर्वन्ति, समाजे च प्रगति लभन्ते तथा शिर सदा आत्मगौरवेण समुन्नत तिष्ठति, तेषामेव आदर्शपुरुषेषु गणना भवति। ईदृशा एव पुरुषा देशस्य समुन्नायका भवन्ति। ये केचन धनिना कुले समुत्पन्ना जना पूर्वपुरुषोपार्जितेन धनेन सुख कुर्वते ये च निर्धनकुलोत्पन्ना अपि जना स्वय कठोर परिश्रम कृत्वा धनमुपार्जयन्ति तेन च सुखोपभोग विदधति तयोर्महान् भेदो भवति। अनयोर्मध्ये द्वितीयस्यैव गौरव भवति प्रशसा च। प्रथम तु कोऽपि गौरवदृष्ट्या नावलोकयति। अपरन्तु एव जना आक्षिपन्ति—अन्योपार्जितेन धनेन सुख भुक्ते। यदि स्वय परिश्रम कर्तव्यो भवेत् तदा ज्ञात भविष्यति यत् कियता परिश्रमेण धनोपार्जन क्रियते इति। पर य परिश्रम कृत्वा सुख भुक्ते न तत्र कस्यापि असूया भवति आक्षेपो वा। प्रत्युत सर्वे एव त हृदयेन प्रशसन्ति तस्य समादर च कुर्वन्ति।

---

५—ढेले। ६—फोड़ते हैं। ७—दँवरी ओसवनी आदि से।

परिश्रमकरणेन अन्यलाभै सह या शरीरपुष्टिर्भवति सापि महान् लाभ अस्ति। परिश्रमपूर्वकं कार्यकरणेन अङ्गसञ्चालनं रक्तसञ्चालनञ्च भवति येन सर्वाण्यपि अङ्ग प्रत्यङ्गानि सुपुष्टानि शोभनानि स्फूर्तिमन्ति च भवन्ति। अपरिश्रमेण जायमाना उदरविकारादयो रोगा अपि परिश्रमकरणेन विनश्यन्ति आरोग्य स्वास्थ्यञ्च अतीव शोभन तिष्ठति। परिश्रमेण हृदय एको महान् आनन्द सन्तोषश्च भवति। "अह कदापि निरर्थको न तिष्ठामि सर्वदैव परिश्रम करोमि। स्वपरिश्रमेणैव मया सर्वमिद समुपार्जितम्" एव यदा मनुष्या विचारयन्ति तदा महान् आन्तरिको हर्ष परितोषश्च भवति। आत्मनिर्भरता च आयाति परिश्रमेण। परिश्रमशाला जना यदा विघ्नबाधाभि मध्ये मध्ये आहन्यमाना अपि परिश्रमबलेन स्वकार्यं साधयन्ति तदा तेषा मनसि आत्मनिर्भरता आयाति। आत्मविश्वासश्च समुत्पद्यते। एव परिश्रमे अनेकानेके गुणा वर्तन्ते। अत एव अस्माकं शास्त्रेषु ऋग्वेदस्य ऐतरेयब्राह्मणे परिश्रम प्रशसा प्रसङ्गे मानवसमाज प्रति अयमुपदेशो वर्तते यत्—

चरैवेति चरैवेति।

अर्थात् परिश्रम कुरु परिश्रम कुरु।

इतिहासग्रन्थानाम् अवलोकनेन ज्ञायते यत् साधारणा अपि अनेके पुरुषा स्वपरिश्रमबलेनैव महापुरुषता प्रापुः। वर्तमानस्य रूसदेशस्य निर्माणे स्टालिन महोदयः अस्य विषयस्य प्रकृष्टतमम् उदाहरणम्। अमेरिकाया युक्तराष्ट्रस्य परिषदः सभापतिः "इब्राहीम लिङ्कन" प्रथम जीवने दरिद्र आसीत्। पर पश्चात् स एव स्वपरिश्रमबलात् राष्ट्रपते योग्यता प्राप। हेनरी फोर्ड, एण्ड्र कार्नेगी प्रभृतयो जना अपि परिश्रमद्वारैव दरिद्रावस्थाता धनकुबेरा भूत्वा जगति यशस्विनो बभूवुः।

एव खलु अवर्णनीय परिश्रमस्य माहात्म्यम्। तथापि अस्माकं देशे तथा परिश्रमशीला जना न उपलभ्यन्ते यथा अन्यदेशेषु। एतस्य गुणस्य न तथा भूयान् समादरः अस्माकं देशे यथा अन्यत्र वय पश्याम।

अस्माकं देशे अनेके ईदृशाः पुरुषाः सन्ति ये स्वकीयेन साधारणेनैव धनेन सन्तुष्टाः सन्तो विशेषपरिश्रमं कर्तुं न कामयन्ते। अपि च श्रमहीनताया दोषो देशेऽस्मिन् तथा वृद्धिं गतो वर्तते यत् बहवस्तु जनाः किञ्चिदपि परिश्रमम् अकृत्वा इतस्ततो याचनेनैव कार्यं चालयन्ति। अत एव अस्माकं देशे हृष्टपुष्टकलेवराणां भिक्षुकानां संख्या अतीव वृद्धिं गता वर्तते। एवम्भूता अपि बहवो जना मिलन्ति ये परिश्रमकरणे स्वनिन्दां मन्यन्ते। ते यष्टिका[८] गृहीत्वा इतस्ततो भ्रमणेन एव आत्मनो गौरवं महत्तां च अवगच्छन्ति। ईदृशा एव च जनाः स्वहस्तेन शौचसमये जलस्य नयनेऽपि[९] अपमानमनुभवन्ति। अत इदमपि कार्यं भृत्य एव सम्पादयति। बहवो दुःखं भुञ्जते, कष्टं सहन्ते परं आलस्यवशीभूता परिश्रमं कर्तुं न उत्सहन्ते। एवमेव परिश्रमविमुखताया रोगो न केवलं वैयक्तिकः अपितु सामाजिकः सवृत्तो वर्तते। गृहे गृहे अलसा जना वर्तन्ते। यस्मात् समयात् अयं दोषो भारतीयेषु समागतः तस्मादेव समयात् अस्माकं दीनताया दुःखस्य परतन्त्रतायाश्च प्रारम्भो जातः। अद्यावधि च वयं तेनैव दोषेण तस्मिन्नेव दुःखसमुद्रे पतिताः स्मः। तावत्कालपर्यन्तं च अस्माकं समुद्धारो न भविष्यति यावत् पुनरपि वयं अन्यदेशवत् परिश्रमशीला न भविष्यामः, स्वकार्यम् अन्यकार्यं वा परिश्रमेण मनो लगयित्वा न करिष्यामः।

---

# धनोपार्जनं तदुपयोगश्च।

इह संसारे यावन्तो नरा नार्यो वा सन्ति ते सर्वेऽपि सुखमेव समीहन्ते न तु कदाचिद् दुःखम्। सर्वेषाम् इयमेव इच्छा भवति यद् अह

---

८—छड़ी। ९—ले जाने में भी।

सर्वप्रकारेण सुखी भूयासम्[1]। कोटिकोटिमितेषु मानवेषु एकोऽपि ईदृशो जनो न मिलिष्यति यः स्वप्नेऽपि दुःखस्य अभिलाषां कुर्यात्। परिधानाय[2] सुन्दराणि वस्त्राणि, धारणाय मणिमुक्तादि-भूषणानि, आरोहणाय[3] गजाश्वादीनि वाहनानि,[4] भोजनाय दधि दुग्ध-घृतादि-समन्वितानि भोज्यान्नानि, निवासाय सुधा-धवलितानि भव्यभवनानि, अन्यानि च सुखसाधनानि विविध वस्तूनि सर्वे एव जना अभिलषन्ति। एतदर्थमेव सर्वे दिवानिशं चिन्तयन्ति विचारयन्ति,तथा सर्वविधान् प्रयत्नान् कुर्वन्ति। परन्तु एतेषु एकोऽपि मनोरथो, यावद् धनं नास्ति, तावत् कथमपि सफलीकर्तुं न शक्यते। अत एव मानवजीवने धनस्य महती उपयोगिता वर्तते।

जीवने धनस्य आवश्यकताया इयत्ता[5] नास्ति। पदे पदे धनस्य आवश्यकता वर्तते। विद्योपार्जने, धर्मकार्ये, परिवारपोषणे, यात्रायां, गृहनिर्माणे, भोजने, पाने, विवाहादौ, स्वागते, सत्कारे, भोगे, विलासे, गीते वाद्ये,यस्मिन् कस्मिन् वा विषये सर्वत्रैव धनमेव आवश्यकं भवति। धनेनैव मनुष्यः स्वार्थं परार्थं वा साधयितुं शक्नोति। यज्ञदानादिकं धर्मकार्यमपि धनं विना न भवितुमर्हति। यस्य समीपे धनं वर्तते स सर्वमपि ऐहलौकिकं सुखं भोक्तुं शक्नोति, दानादिना समाजसेवां कर्तुं शक्नोति, सत्कारेण गुणिनो जनान् अनुकूलयितुं शक्नोति, तीर्थगमनादिना यज्ञयागादिना च पारलौकिकमपि श्रेयः सम्पादयितुं क्षमते। धनिनो जनाः समाजे सर्वत्रैव सत्क्रियन्ते सर्वैरैव समाद्रियन्ते। विशेषतस्तु अस्मिन् धनप्रधाने समये यस्य समीपे धनं वर्तते स एव सर्वथा माननीयः श्रेष्ठो वरिष्ठश्च मन्यते। एतद्विपरीतं ये जना निर्धनाः सन्ति तेषां सर्वा अपि अभिलाषा मनसि एव विलीयन्ते। स्वप्नेऽपि सुखं तेषां कृते दुर्लभं

---

१—होऊँ। २—पहिनने के लिये। ३—चढ़ने के लिये। ४—सवारियाँ। ५—सीमा।

भवति। अहोरात्र परिवारपोषणे ते व्यग्रा एव व्याकुलाश्च तिष्ठन्ति। कदाचित् लवणं नास्ति, कदाचित् इन्धनं नास्ति। कश्चित् प्राघुण[६] अतिथिर्वा आयाति चेत् महान् सङ्कटः समुपस्थितो भवति। ते इच्छन्तोऽपि यथेच्छं सत्कर्तुं न पारयन्ति। अन्नवस्त्रयोरेव समस्यायाः तेषामवकाशो न मिलति तत् कथं ते तीर्थभ्रमणं कुर्युः कथं वा यज्ञ-यागादिकमेव सम्पादयेयुः। एतादृशं जनं न परिवारः समाद्रियते न भ्रातरः पृच्छन्ति, न जाया सेवते, न समाजः सत्कुरुते नापि सुहृद तस्य वचनं शृण्वन्ति। सर्वत्र एव ते अपमानिता प्रतारिता[७] विडम्बिता पृथक्कृताश्च[८] आजीवनं दुःखदैन्यमयानि दिनानि यापयन्ति।

धनस्य धनाभावस्य च अयमेव परिणामः प्रतिदिनं प्रत्यक्षीभवति। अत एव अस्माकं शास्त्रेषु सर्वथा धनोपार्जनस्य अनिवार्यता प्रति-पादिता अस्ति। वैदिकधर्मानुसारं चत्वारः पुरुषार्थाः मनुष्याणां कृते कर्तव्यतया निर्दिष्टाः सन्ति। धर्म अर्थ काम मोक्षश्चेति। एषु यथा धर्मसाधनं सर्वथा कृते परमावश्यकं वर्तते तथैव धनोपार्जनमपि। अस्माकं धर्मशास्त्राणि सदैव दीनतायाः दरिद्रतायाश्च दूरीकरणाय उपदिशन्ति। सर्वैरपि जनैः धनधान्यसम्पन्नैः सुसमृद्धैः सुवस्त्रैः समलङ्कृतैश्च भाव्यमिति अस्माकं धर्मस्य सिद्धान्तः अस्ति। अतो व्यवसायः वाणिज्यम्, शिल्पकला, कृषिकर्म, राजसेवा अध्यापनञ्चेति यावन्तो धनोपार्जनस्य पन्थानः सन्ति तेषु केनापि अनुकूलेन पथा धनोपार्जनाय प्रयत्नो विधेयः।

परं यथा धनस्यावश्यकता वर्तते तथैव तस्य उपार्जने उपभोगे च सन्मार्गावलम्बनस्य अपि। धनेन सुखं भवति इति उपरि लिखितं वर्तते। परन्तु यदि समुचितरूपेण सन्मार्गेण च तस्य उपार्जनं उपभोगो

---

६—पाहुन। ७—ठगे हुए। ८—अलग किये हुए।

या न क्रियते तर्हि तदेव दुःखकारणमपि भवितुमर्हति। पूर्वं जना धर्मपूर्वकं धनोपार्जनं कुर्वन्ति स्म। परं सम्प्रति जना धनोपार्जने धर्मस्य अधर्मस्य वा ध्यानं न कुर्वन्ति। येन केनापि उपायेन धनार्जने प्रवृत्ता सन्ति। लुण्ठनेन[10] चौर्येण, वञ्चनेन[11] उत्कोचग्रहणेन,[12] असत्यभाषणेन, भयप्रदर्शनेन, विश्वासघातेन, दायापहरणेन[13] च स्वार्थं साधयन्तो जना दृश्यन्ते। राजसेवायां,[14] भृतिकर्मणि,[15] वाणिज्ये वा सर्वत्रैव भ्रष्टाचारस्य साम्राज्यं दृष्टिपथमायाति। अत एव परस्परं घृणा अशान्तिः अविश्वासः असन्तोषः उपद्रवः कलहः कोलाहलो युद्धं च दिने दिने वर्द्धमानं विलोक्यते। अतो धर्मानुसारमेव सर्वैः धनोपार्जनं कर्तव्यमिति भारतीयसंस्कृतेः सिद्धान्तः अस्ति।

यथा धनोपार्जने तथैव धनस्य उपभोगेऽपि ध्यानदानस्य आवश्यकता अस्ति। धनस्य हि द्विविधरूपेण सदुपयोगो भवति। भोगेन दानेन च। बहवो जना धनम् उपार्जयन्ति परं न तस्य उपभोगं कुर्वन्ति नापि दानमेव ददते। ते न कदाचित् शोभनं वस्त्रं दधते[16] न च समीचीनम् अन्नमेव भुञ्जते। प्रभूते[17] धने सत्यपि दुःखेनैव दिनानि यापयन्ति। एवमेव ते दानमपि न किञ्चित् कुर्वन्ति। भिक्षुकं दृष्ट्वा दूरादेव आननं भ्रुकुटीकुटिलं विदधति। साधून् दृष्ट्वा विलीयन्ते। सामाजिके हितकार्येऽपि एकपणं[18] व्ययीकर्तुं न अभिलषन्ति। एवम्भूता अनेके जना ग्रामे ग्रामे सन्ति। परन्तु अयं शास्त्रीयः पन्था नास्ति, धनस्य समुचितो व्यवहारो नास्ति। यदि धनं भवेत् तर्हि तस्य सम्यक् उपभोगः कर्तव्यः सत्पात्रे च दानं कर्तव्यम्। सामाजिकेषु कार्येषु अपि यथासम्भवं सहायता कर्तव्या।

---

१०—लूटने से। ११—ठगने से। १२—घूस लेने से। १३—दूसरे का हिस्सा ले लेने से। १४—सरकारी नौकरी में १५—मजदूरी से। १६—धारण करते हैं। १७—पर्याप्त, काफी। १८—पैसा।

दुःखस्य विषयो वर्तते यत् बहवो धनस्य महत् दुरुपयोगमपि कुर्वन्ति। समाजे ईदृशानामपि जनानां न्यूनता नास्ति। एतादृशा जनाः सत्कार्ये तु धनं न व्ययीकुर्वन्ति परन्तु असत्कार्येषु मुक्तहस्ता भवन्ति। मादकद्रव्यसेवने, असत्पात्रदाने, द्यूतक्रीडायां, गणिकानृत्यकर्मणि, पाश्चात्यजनसत्कारे, व्यभिचारे च प्रायेण एतादृशा जना धनस्य विनाशं कुर्वन्ति। एवं प्रकारेण, न जानीमः, कियतो धनस्य प्रतिवर्षं विनाशो भवति। भारतवर्षस्य दुःखकारणेषु दरिद्रतायाश्च अयमपि एको महान् हेतुरस्ति। अतः तथा अस्माभिः प्रयत्नो विधेयो यथा कोऽपि अनुचितेषु कार्येषु धनस्य उपयोगं कर्तुं न पारयेत्। यदि च कुर्यात् तर्हि तस्मै सामाजिको दण्डो दीयेत। एवं च ये धनानि संचित्य तस्य केवलं सञ्चयमेव कुर्वन्ति न भोगं न च दानम्, तेऽपि भोगाय दानाय च प्रेरणीयाः। एवं प्रकारेण यदा धनस्य उपार्जनं उपभोगो व्ययश्च समुचितरूपेण भविष्यति तदैव अस्माकं कल्याणं भविष्यति देशस्य चेति मत्वा सर्वैरेव अस्यां दिशि पूर्णरूपेण ध्यानं देयम्।

---

## स्त्री-शिक्षा।

समाजस्य हिताय यथा पुरुषाणां मध्ये शिक्षाप्रचारस्य आवश्यकता वर्तते तथैव स्त्रीणामपि। यदि केवलं पुरुषा एव शिक्षिता भवेयुः स्त्रियश्च अशिक्षिताः तदा न तु तयोः जीवनं सुखमयं भवितुमर्हति न च समाजस्य हितमेव। अतः पुरुषाणाम् इव स्त्रीणां शिक्षणस्यापि महती आवश्यकता वर्तते।

गृहस्थाश्रमः चतुर्षु अपि आश्रमेषु श्रेष्ठो मन्यते। स च पुरुषाणां स्त्रीणाञ्च सम्मिलितेन सहयोगेन, पारस्परिकेण प्रेम्णा, अभिन्नेन

ऐकमत्येन च समीचीनतया चलति। परन्तु यदा पुरुषः शिक्षितो भवति स्त्री च अशिक्षिता तदा न तयोः स्त्रीपुरुषयोः सर्वेषु कार्येषु परस्परं सहयोगो जायते, न परस्परं प्रीतिः तिष्ठति, नापि विचारेषु ऐकमत्यमेव भवति। उभौ अपि प्रायेण भिन्नकर्माणौ भिन्नभिन्न विचारौ भिन्नव्यवहारौ च भवतः। अतः उभयोरपि जीवनं सुखमयं सन्तोषमयञ्च न भवति। यथा कश्चित् रथः एकस्य चक्रस्य समीचीनत्वेऽपि[1] अपरस्य चक्रस्य दुष्टतया[2] सम्यक् न चलितुं शक्नोति तथैव गार्हस्थ्य-जीवनमपि एकस्य शिक्षितत्वे अपि अपरस्य अशिक्षिततया पूर्णरूपेण आनन्दमयं न भवति। परन्तु यदा उभौ अपि शिक्षितौ भवतः तदा इयं दशा न भवति। अतः यथा वयं स्वपुत्राणां शिक्षायै प्रयत्नं कुर्मः तथैव पुत्रीणामपि शिक्षायाः उपरि ध्यानं दातव्यम्। तदैव दम्पत्योः परिवारस्य समाजस्य च यथेष्टं हितं भविष्यति। अत एव शास्त्रेषु लिखितं वर्तते यत्—

कन्याऽप्येवं लालनीया शिक्षणीया प्रयत्नतः।

[ महानिर्वाणतन्त्र ]

स्त्रीणां शिक्षायाः विषये अस्माकं समाजे परस्परविरोधिनौ द्विविधौ विचारौ चलतः। ये नवीनशिक्षादीक्षासम्पन्नाः जनाः पाश्चात्य-शिक्षायाः अनुकरणं कुर्वन्ति ते स्वकीयाभ्यो बालिकाभ्यो न केवलं साधारणीमेव प्रत्युत महतो महीयसीं शिक्षां दातुमिच्छन्ति। तेषाम् अयं विचारो वर्तते यत् यथा पुरुषाः उच्चशिक्षां लब्ध्वा राजकीयकार्येषु अन्येषु वा कार्यक्षेत्रेषु उच्चपदानि लभन्ते तथैव उच्चशिक्षां लब्ध्वा स्त्रीसमाजेनापि उच्चपदानि लब्धुं शक्यन्ते। अतः स्त्रीणामपि कृते तादृश्याः उच्चशिक्षायाः प्रबन्धः कर्तव्यो येन ताः पुरुषैः सह प्रतियोगिता[3] कर्तुं शक्नुयुः, पुरुषा इव च उच्चादुच्चतरेषु पदेषु कार्यं कर्तुं

---

१—अच्छा होने पर भी। २—खराब होने से। ३—मुकाबला।

बम्बईनगरे अध्यापयति पत्नी च कालिकातायाम्। यस्मिन् समये बम्बईनगरे पत्युः शिरसि वेदना जायते तस्मिन् समये पत्नी कालिकातायां कन्दुक-क्रीडनपरायणा तिष्ठति। कार्यालयात् निवासस्थानमागत्य पतिः भृत्यादिना परिश्रमम् अपनोदयति* पत्नी च कुक्कुरलालनेन मनो विनोदयति। आजीवन पृथग् निवासेन कदापि तौ पूर्णं सहवाससुखं नानुभवतः। अतः पारिवारिक सुख दृष्ट्या स्त्रीणां कृते उच्चशिक्षाया विशेषावश्यकता न प्रतिभाति। यद्यपि प्राचीनकाले गार्गी मैत्रेयी-प्रभृतयः कतिपया आर्यमहिला आसन्नेव विशिष्टज्ञानसम्पन्ना, परं साधारणतया उच्चशिक्षायाः प्रचारेण कश्चित् लाभो दृष्टिगोचरो न भवति।

ये च केचन पुराणाः पुरुषाः सर्वथा एव स्त्रीणां कृते शिक्षाया निषेधं कुर्वन्ति, अशिक्षिता एव च ता रक्षितुम् इच्छन्ति तेषामपि विचारो भ्रान्त एवास्ति। यतो हि शिक्षाया अभावेनैव स्त्रीषु अनेके दोषा अपि दृश्यन्ते। कस्याम् ऋतौ किं वस्तु स्वास्थ्यकरं किं च अस्वास्थ्यकरम् इति तासां ज्ञानं न भवति। अन्धविश्वासस्य भ्रान्तधारणाया मूढाग्रहस्य च ता भाण्डागाराणि एव भवन्ति। सदैव विवदन्ते, प्रतिक्षणं कलहायन्ते, पदे-पदे शपथं कुर्वन्ति, मुहुर्मुहुः अश्लीलशब्दान् उच्चारयन्त्योऽपि न सङ्कुचन्ति न च लज्जन्ते। शिक्षा विनैव ता देशकालयोः वर्तमानपरिस्थितेः सर्वथा अपरिचिता भवन्ति।

अनेन कारण-समुदायेन स्त्रीणां शिक्षायै "ननु नच" करणस्य काचित् आवश्यकतैव नास्ति। परं कीदृशी शिक्षा देया इति विषयस्तु अवश्यमेव विचारणीयो वर्तमानसमये। पाश्चात्यदेशानाम् आदर्शानुसारं या शिक्षा प्रचाल्यमाना अस्ति सा तु निश्चयमेव हानिकरी वर्तते स्त्रीणां कृते। न अनया शिक्षया स्त्रीषु भारतीया आदर्शा एव आगन्तु-

---

७—दूर करता है।

शक्नुवन्ति, नापि ता गृहकार्यकुशला एव भवितुमर्हन्ति । अतो वर्तमान-शिक्षापद्धतौ परिवर्तनं विधाय स्त्रीणां कृते तथाविधायाः शिक्षायाः प्रबन्धः कर्तव्यो यथा ता इतिहास-भूगोल-गणित-स्वास्थ्यादिविषयैः सह पारिवारिकीमपि शिक्षां प्राप्नुयुः । अन्यभाषाभिः सह तासां कृते साधारणी संस्कृतभाषाया अपि शिक्षा देया येन शास्त्रपुराणादीनां पठनेन स्तुति-प्रार्थना-पूजादिना च भारतीयसभ्यतायाः सम्यक् प्रचारं स्थापि कर्तुं शक्नुयुः । तथैव पाकविद्याया धात्रीविद्यायाः सीवनादिललितकलायाः कृषिविद्यायाश्च शिक्षणं कर्तव्यं येन गृहकार्य-सञ्चालनेऽपि ताः सुविचक्षणा भवेयुः । प्रत्येककन्यायै एतादृशी शिक्षा देया येन सा आदर्शभगिनी आदर्शगृहिणी आदर्शजननी च सम्पद्येत । एतादृशी एव स्त्रीशिक्षा स्त्रीणां पुरुषाणां परिवारस्य समाजस्य राष्ट्रस्य च कृते हितावहा कल्याणकारी च भवितुमर्हति । अतः सम्प्रति तथा प्रयत्नः कर्तव्यो येन सर्वत्रैव स्त्रीशिक्षाया प्रचारः स्यात् स्त्रियश्च शिक्षिताः सत्यो गृहस्य राष्ट्रस्य च भूषणानि भवेयुः ।

धार्मिकेषु विषयेषु अपि तासां सर्वथा भ्रान्तमेव ज्ञानं वर्तते । अधर्ममेव धर्मं मन्यमानाः ताः पदे पदे धूर्तजनैः पाखण्डिभिश्च वञ्चिता भवन्ति । एवं च शिक्षां विना प्रायेण तासाम् अभद्रमेव रूपम्, अभद्रा एव वाचः, अभद्र एव व्यवहारः, विपरीता एव च विचारा भवन्ति । एभिश्च दोषैः न केवलं ता आत्मानमेव दूषयन्ति अपि तु समाजमपि । अतः स्त्रीशिक्षायाः प्रचारः सर्वथा परमावश्यक इत्यत्र नास्ति सन्देहावसरः । अशिक्षिताः स्त्रियो बालक-बालिकादीनामपि अशिक्षाया कारणानि भवन्ति । यतो हि माता एव प्रथमो गुरुर्भवति बालकबालिकानाम् । तासां क्रोडः[८] एव च प्रथमा पाठशाला । अस्यामेव पाठशालायां प्राथमिकी शिक्षा मिलति सर्वेभ्यो मानवेभ्यः । परं यदा अशिक्षिता

८—गोदी ।

मातरो भवन्ति तदा न ता बालकेभ्यः शिक्षा दातुं शक्नुवन्ति, न त सत्पथे एव तान् प्रवर्तयितुं क्षमन्ते। प्रत्युत मातृणां दोषेण तेऽपि दूषित स्वभावा उन्मार्गगामिनो दुराचाराश्च जायन्ते। एतद्विपरीतं तु य मातरः शिक्षिता भवन्ति ता निजसन्ततीः शैशवादेव[9] शिक्षयन्ति सदाचारान् उपदिशन्ति, सत्पथे प्रवर्तयन्ति, दुरभ्यासान् दूरीकुर्वन्ति महापुरुषाणां च चरितानि श्रावयित्वा[10] तेषु सच्चरित्रताया महत्त्व च भावं भरन्ति। एतादृशा एव च बालका अग्रे गत्वा समाज आदर्शपुरुषा भवन्ति।

---

# देशप्रीतिः

सर्वेषामपि मनुष्याणां हृदये स्वस्वदेशस्य रक्षायाः समुन्नतेः स्वतन्त्रतायाश्च या भावना भवति सा एव देशप्रीतिः देशभक्तिः इति वा कथ्यते। इयं च भावना स्वाभाविकी भवति सर्वेषाम्। यस्मिन् देशे मनुष्यो जन्म गृह्णाति, यस्य देशस्य अन्नेन जलेन वायुना च यो जीवति वर्धते परिपुष्टश्च भवति तं प्रति तस्य जन्मत एव नैसर्गिकः स्नेहो जायते। तस्य देशस्य वनोपवनानि, सरितः सरोवराः, गिरयः पर्वताः, पशवः पक्षिणो लता विटपादयश्च दृष्ट्वा तस्य चेतांसि आनन्दं समुल्लासयन्ति। स्वदेशस्य कथोपकथासु, प्राचीनपरम्परासु, आचारविचारादिषु, रीतिनीतिषु, क्रीडाकौतुकेषु च यथा आत्मीयता मनसि श्रद्धा स्नेहातिशयश्च जायते न तथा अन्यदेशस्य। युगे युगे या स्वदेशवासिभिः पुरुषैः धर्मे कल्याण एव महत्त्वमाप्तं तेषु महापुरुषेषु श्रद्धा-

---

९—बचपन से ही। १०—सुनाकर।

रितायाः समतायाः पक्षपातस्य च दृढा भावना भवति। अत एव स्वदेशं प्रति मानवाना प्रीतिः सहजा स्वाभाविकी च।

अस्याश्च स्वदेशप्रीतेः समये समये सर्वेषामेव अनुभवो जायते। जीवने बहवः किल एवम्विधा अवसरा आयान्ति यदा हृदयं स्वदेशप्रेम्णा विह्वलता प्रयाति। केनापि हेतुना परदेशे गच्छतः पुरुषस्य स्वदेशत्याग-समये कश्चित् अवर्णनीयः स्नेहातिशयो हृदयं व्याकुलीकुरुते। चिर-प्रवासानन्तर च पुनः सम्मिलितेषु स्वबन्धुषु अवलोकितेषु च स्वदेशीय-गिरिनदी पुरग्रामेषु अपूर्वेण आनन्देन महता च समुल्लासेन हृदय गद्गदं भवति आत्मान च जना विस्मरन्ति। लङ्कायाः परावर्तनकाले स्वदेशस्य चिरवियुक्तानि वस्तूनि सतृष्ण समवलोक्यमानायाः सीताया हृदय कियत् आनन्दितम् आह्लादित च भवति स्म इति कविकुलशिरो-मणिना कालिदासेन स्वकीये अमरकाव्ये रघुवंशे अतीव समीचीनरूपेण परिणतं वर्णितं। भगवान् रामचन्द्रः स्वयमपि चतुर्दशवर्षानन्तर प्रवासाद् विनिवृत्य स्वकीया जन्मभूमिम् अयोध्या,कलकलनिनादेन प्रवहन्तीं मातरं सरयूञ्च विलोक्य क्षण यत् विस्मृतमानसो बभूव तत्रापि स्वदेशानुराग-स्यैव भावनाम् अवलोकयाम।

परन्तु एतदपेक्षया अपि स्वदेशप्रीते स्पष्टतरं स्वरूपं तदा पुरतः समायाति यदा स्वदेशस्य स्वाधीनतायाः सम्मानस्य रक्षायाश्च अवसरः समुपस्थितो भवति। संसारे प्राणेभ्यः प्रियतरं किमपि वस्तु नास्ति। परम् एतादृशे अवसरे प्राणान् अपि जनाः सहर्षं परित्यजन्ति। सैनिकाः समराङ्गणेषु आहार-विहारादिकं विस्मृत्य, शत्रूणा शस्त्रप्रहारान् अविगणय्य[1] यत् अविरतं युद्ध्यन्ति महता च उत्साहेन आत्मानं मृत्युमुखे समर्पयन्ति तदपि स्वदेशप्रीतेः एव प्रेरणया। इतिहासेषु स्वदेशप्रीतेः बहूनि एतादृशानि उदाहरणानि मिलन्ति यानि पठित्वा

१—कुछ न समझ कर।

श्रुत्वा च मनसि महान् आनन्दः समुत्साहश्च जायते। स्वदेशप्रीतेरेव प्रभावेण पुरुराजो महाबलवतः अलक्षेन्द्रस्य विजययात्राया विघ्नं समुपस्थापितवान्। महाराणाप्रतापस्य चित्तौररक्षायै आत्मविसर्जनम्, छत्रपतेः श्री शिवाजीवस्य गिरिगह्वरेषु भ्रमणम्, पृथ्वीराजस्य च मुहम्मद्-गोरी नामकेन यवनराजेन सह युद्धं कृत्वा प्राणपरित्यागः स्वदेशप्रीतेरेव उत्कृष्टतमम् उदाहरणम् अस्ति। राजपुतानां प्रातःस्मरणीया वीराङ्गनाः स्वहस्ताभ्यां पतिपुत्रौ अस्त्रशस्त्रादि-सुसज्जितौ कृत्वा समरक्षेत्रे स्वयमेव प्रेषयामासुः। यच्च लक्ष्मीबाई प्रभृतयो वीरयुवतयः अन्ततः स्वयमपि युद्धक्षेत्रे अवतीर्य भयानकं युद्धं चक्रुः तत् स्वदेशस्यैव प्रेम्णा। स्वदेशस्यैव प्रेम्णा विगते रूस-जापान युद्धे अनेका जापानदेशीया महिला आत्महत्यां कृत्वा स्वकीयपुत्राणां युद्धयात्रां निष्कण्टकां कृतवत्यः। साम्प्रतं भारते अपि स्वतन्त्रताप्राप्तये सहस्राधिका नवयुवानो जीवनं प्रददुः, अनेके राजनीतिका नेतारो जीवनपर्य्यन्तं कारागारदण्डं प्रापुः, शताधिकाः क्रान्तिकारिणो जीवनमोहं परित्यज्य सहर्षं मृत्युम् आलिङ्गितवन्तः, लक्षलक्षाः स्वयमेवकाः पशुमारं मारिताः, सजीवं नाशिता अनेके परिवाराः, बहवश्च निर्वासिताः[१]। अस्माकं हृदयसम्राट् नेताश्री सुभाषचन्द्र बोसः सर्वस्यापि सांसारिक सुखस्य उपरि पादप्रहारं कृत्वा, आजीवनं च ब्रह्मचर्यव्रतं पालयित्वा लोकोत्तरं कार्यं कृतवान्, अन्ते च विदेशेषु स्वकीयान् प्राणान् उत्ससर्ज। तत्र किं निमित्तमासीत्? अस्यैव हृदये प्रज्वलन्ती देशसेवाया भारतमातुश्च स्वतन्त्रताया अव्यभावना एव।

एतत्सर्वं विलोक्य विचार्य च स्वदेशप्रीतेः भावना कीदृशी स्वाभाविकी प्रबला च भवति इति सुगमतया एव अवगन्तुं शक्यते। अयं प्राणिनां जन्मसिद्धः स्वभावः, कर्तव्येषु परमोत्तमं कर्तव्यं, धर्मेषु सर्वश्रेष्ठो धर्मश्च अस्ति। स्वदेशप्रीत्या स्वदेशार्थं प्राणदानेन च न केवलं स्वदेशस्यैव रक्षा गौरवं वा भवति अपि तु आत्मनोऽपि मनसि महान्

१—देश से बाहर निकाल दिये गये।

उल्लासो भवति, स्वाभिमानस्य भावना जागर्ति, जन्मभूमे आशीर्वादो मिलति मरणानन्तरं च अक्षया लोका लोकोत्तरा च कीर्ति इति अनेके लाभा गुणाश्च सन्ति स्वदेशप्रीते ।

इयं च स्वदेशप्रीति न केवल युद्धद्वारा राजनीतिकेन आन्दोलनेन एव वा प्रकटयितुं शक्यते । शान्तिसमये अपि साहित्य निर्माणेन, वाणिज्यव्यवसाय विस्तारेण, शिल्पकला सवर्द्धनेन, शिक्षाप्रसारेण, नवनवपदार्थानाम् आविष्कारेण च स्वदेशस्य समुन्नति क्रियते साऽपि स्वदेश प्रति गाढानुरागस्यैव कारणात् । अतो युद्धकाले युद्ध कृत्वा, शान्तिकाले आन्दोलनेन, शान्तिसमये च साहित्य विज्ञानादि विस्तारद्वारा स्वदेशसेवाकरण सर्वेषामपि मानवाना परम कर्तव्यमिति विषये नास्ति मतभेदस्य कृते अवसर । अतएव सम्प्रति सर्वेऽपि भिन्नभिन्न देशवासिना जना स्वदेशप्रेम-परवशीभूता अहोरात्र स्वदेशसेवायै स्वदेशरक्षणाय स्वदेशगौरव वर्द्धनाय च बद्धपरिकरा दृश्यन्ते ।

परं तु स्वदेशप्रीति एव प्रीते अन्तिम सीमा नास्ति । स्वदेश प्रीत्या सहैव यदि जन सम्पूर्णेऽपि ससारे प्रीतिविस्तार कुर्यात् तदा स देशवासिना इतोऽपि समधिक जगत कल्याण कर्तु पारयति । स्वदेशवासिना कल्याण साधयन्तो जना यदि भौगोलिक सीमानम् उल्लघ्य समस्तनापि विश्वेन सह स्नेह सम्बन्ध स्थापयेयु, सर्वेषामपि मानवाना हितचिन्तन कुर्यु, समग्रा च मानवजाति एकस्मिन् स्नेहसूत्रे बध्नीयु तर्हि न केवलम् एकस्यैव देशस्य प्रस्युत सर्वेषामपि देशाना समस्तायाश्च मानवजाते महान् उपकार सम्पादित स्यात् ।

परं साम्प्रदायिकताया स्वार्थभावनायाश्च प्रबलया वात्यया[३] विश्व बन्धुत्वस्य सर्वसुखप्रदो विशालवृक्ष सम्प्रति समूलम् उन्मूलित इव सवृत्तो वर्तते । सर्व एव सम्प्रति केवल स्वदेशस्यैव समुन्नति साधने

३—आँधी से ।

संलग्ना सन्ति। स्व स्वदेशहितसाधनार्थम् अन्यदेशानां विनाशकरणे कस्यापि सङ्कोचो नास्ति। दुर्बलस्य उपरि आक्रमणाय सबला देशाः सततमेव अवसरं प्रतीक्षमाणाः सन्ति। विश्वशान्तेः प्रचारं कुर्वन्तोऽपि स्वकीयसाम्राज्यस्य विस्तारलोभात् मुक्ता न सन्ति। अत एव जगति सर्वत्रैव महीयसी युद्धज्वाला, भयङ्करो रक्तपातः, सुमहान् सर्वः, विपुलश्च विप्लवो दृष्टिगोचरो भवति। अनेकानि सुखसाधनसमन्वितानि नगराणि श्मशानभूमितां गतानि सन्ति। अतो देशप्रीत्या सह विश्वप्रीतेरपि प्रचारस्य महती आवश्यकता वर्तते।

आशास्महे स्वतन्त्रतां प्राप्तं सम्प्रति भारतवर्षं एवं पुराकाल इव भूयोऽपि समस्ते जगतीतले विश्वप्रीतेः विश्वबन्धुत्वस्य च विस्तारं करिष्यतीति।

---

# ग्रामोन्नति-योजना

अस्माकं देशो ग्रामप्रधानदेशः अस्ति। अत्र ग्रामाणां संख्या प्रायशः सप्तलक्षपरिमिता वर्तते। देशस्य प्रतिशतं नवतिर्जनाः[१] एषु एव ग्रामेषु निवसन्ति। अत एव इदं निश्चितं वर्तते यत् ग्रामाणां समुन्नत्या एव भारतवर्षस्य वास्तविकी समुन्नतिः भवितुम् अर्हति।

परन्तु दौर्भाग्यवशात् अस्माकं ग्रामाणां दशा सम्प्रति नितान्तमेव दयनीया वर्तते। सुख शान्ति-पूर्वकं जीवनयापनाय येषां साधनानां मानवस्य भवन्ति तेषां ग्रामेषु सर्वथा अभाव एव दृश्यते। ग्रामीणं जीवनं सम्प्रति सर्वप्रकारेण नीरसं निरानन्दं कष्टबहुलञ्च सञ्जातं वर्तते। सर्वैरपि जीवनोपयोगिभिः साधनोपादानैः वञ्चिता ग्रामीणा जनता

४—उथल पुथल। १—नब्बे आदमी।

कियता कष्टेन काल नयति इति ते एव ज्ञातु शक्नुवन्ति येषा द्वित्राणि अपि दिनानि ग्रामवासस्य अवसरो मिलित स्यात् ।

मानवजीवनस्य कृते शिक्षायाः सर्वाधिक महत्त्व वर्तते । अत एव सर्वेऽपि विभिन्नदेशवासिन पुरुषा निज निज देशेषु शिक्षाया प्रसारस्य उपरि सर्वाधिक स्थान दत्तवन्त सन्ति । तस्यैव इद फल वर्तते यत् तेषु देशेषु क्वचित् प्रतिशत नवति[२], क्वचित् पञ्चनवति[२] क्वचित् च अष्टानवति[३] जना शिक्षिता जाता सन्ति । परतु अस्माक देशस्य तत सर्वथा विपरीता दशा वर्तते । तत्रापि ग्रामेषु विशेषत । अत्र अभिरुचे उत्साहस्य साधनाना च अभाववशात् प्रतिशत दश द्वादश पञ्चदश अपि जना कठिनतया साक्षरा सञ्जाता सन्ति । न तु एतावन्तोऽपि सम्यक् रूपेण शिक्षिता । दूरे दूरे पाठशाला सन्ति । जनता शिक्षाया महत्त्व न जानाति । दरिद्रता पृथगेव दण्डम् आदाय मार्गे विघ्नबाधा उपस्थापयन्ती तिष्ठति । काष्ठपट्टिका[४] अपि न मिलति बालकेभ्य का पुन कथा शुल्कदानस्य ? परिणाम तस्य अय वर्तते यत् बालका बाल्य कालादेव प्रात क्षुरप्र[५] कुद्दाल[६] च गृहीत्वा कृषिकर्मणि प्रवृत्ता भवन्ति, अपराह्णसमये गोमहिषीः[७] चारयन्ति, अवशिष्ट च समय कलहे कोला हले वृथालापे शयने आहिफेने "सुर्तीतमाकू"-भक्षणे च यापयन्ति । य समयो विद्यार्जनस्य ज्ञानसञ्चयस्य च भवति स समयो गच्छति तेषा घासकर्तने[८] बर्करीचारणे[९] इतस्ततो भ्रमणे च । अत प्रायेण बहव ग्रामीणजना आजीवन अक्षरज्ञान रहिता एव तिष्ठन्ति । अत एव च न तेषा स्वकर्तव्यज्ञान वर्तते नापि अधिकाराणाम् । अत एव च त पदे पदे शासकै पीड्यन्ते, अधिकारिभि अपमन्यन्ते धूर्तजनैश्च वञ्च्यन्ते । इयमेव दशा वर्तते ग्रामेषु शिक्षाया ।

---

२—पचानवे । ३—अठानवे । ४—काठ की पटरी । ५-खुरपा । ६-कुदारी । ७-गाय भैंस । ८-घास काटने में । ९-बकरी चराने म ।

द्वितीयं मानवजीवनस्य कृते आवश्यकं वस्तु वर्तते स्वास्थ्यम्। अत्रापि महती न्यूनता वर्तते। तत्र अनेकानि कारणानि सन्ति। प्रथमन्तु स्वास्थ्य-सम्पादने ध्यानमेव नास्ति सर्वेषाम्। द्वितीयतो दारिद्र्यवशात् स्वास्थ्यकरं भोजनं न मिलति। तृतीयञ्च तेषां गृहं, द्वारं, पार्श्ववर्तिनी भूमिः, पशुबन्धनस्थानम्, कूपतडागादीनां जलम्, ग्राममार्गाः, जलनिस्सरणं[१०] चेति सर्वमपि अस्वच्छं, स्वास्थ्यहानिकरं च भवति। न केवलम् एतावदेव। शरीरं वस्त्रं चापि येषां महामलिनं धूलिधूसरितं दुर्गन्धपूर्णं च रहन्ति। शौचस्नानादीनां कश्चिन् नियमो न भवति। स्थले स्थले च अवकरा[११] निक्षिप्ता दृश्यन्ते। यानश्च यत्रैव इच्छन्ति तत्रैव विष्ठां कुर्वन्ति। एभिरेव कारणैः ग्राम्यजनाः स्वास्थ्यसम्पत्तेः अपि वञ्चिता एव सन्ति।

तृतीयं जीवनस्य साधनं वर्तते अन्नं वस्त्रं च। यदि उदरे अन्नं शरीरोपरि वस्त्रं च न भवेत् तदा कथं कश्चित् जीवितुं शक्नोति कथं च किञ्चित् कार्यं कर्तुम्? परं ग्रामेषु अनयोरपि यादृशी न्यूनता वर्तते सा सर्वथा वर्णनातीता अस्ति। अन्नवस्त्रयोः यथा कष्टं अस्माकं ग्रामीणा जना अनुभवन्ति तद् दृष्ट्वा कस्य सचेतसो हृदयं द्रवीभूतं लोचने च अश्रुपरिप्लुते न भविष्यतः? अनेके ईदृशा ग्रामवासिनः सन्ति ये कदाचित् एककालमेव भुक्त्वा, कदाचित् अर्धोदरं[१२] भुक्त्वा, कदाचित् सक्तून् पीत्वा, कदाचित् इक्षुदण्डम्, चूषित्वा, कदाचित् कन्दान् भक्षयित्वा सर्वाभावे च कदाचित् निराहारमेव स्थित्वा दिनं रात्रिं च यापयन्ति। इतोऽपि दयनीया दशा तु वर्तते तेषां जनानां ये गोमयेभ्यो[१३] गोधूमान् एकैकशो निःसार्य[१४] कदाचित् रोटिकाभक्षणस्य अवसरं लभन्ते। दिने भोजनं मिलति चेत् रात्रौ नहि, रात्रौ मिलति चेत् दिने नहि। कदाचित् च उभयोः समययोः उपवासः।

---

१०—पानी का निकास। ११—कूड़ा, कतवार। १२—आधा पेट।
१३—गोबर से। १४—निकालकर।

ये ग्रामेषु समीचीना गृहस्था मन्यन्ते तेषामपि गृहे द्विदल[१५] वर्तते चेत् शाकस्य अभावः । का पुनः वार्ता दध्नो दुग्धस्य अथवा घृतस्य ? एकमेव वस्त्रस्यापि महत्कष्टं भवति । ग्रामधनानां कृषकाणां कस्यापि गृहे पर्याप्तं वस्त्रं नास्ति । एकेनैव वस्त्रेण बहव कार्यं चालयन्ति । अनेके स्त्रीपुरुषा माघमासस्य भयानके शैत्ये[१६] एकमेव वस्त्रं नीचैः उपरि च कृत्वा कालरात्रिं यापयन्ति । अहाहा ! का नाम दशा वर्ण्यताम् तासां ग्रामयुवतीनां यासाम् एका एव शाटी[१७] वर्तते । साऽपि सहस्रच्छिद्रा । सीवनाय[१८] सूची[१९] मिलिता चेत् दोरकस्य[२०] अभावः । अनेकधा वनमाता[२१] अपि अङ्गानि गोपायितुं अशक्नुवन्त्या दरिद्रतायै लज्जाम् उपायनीकृत्य[२२] यथाकथञ्चित् कार्यं सञ्चालयन्ति । अभावादेव कृषकजना वस्त्राणां स्वच्छतासम्पादनेऽपि असमर्था भवन्ति । कुत एव धनमय वस्त्रं ते धावनाय[२३] रजकगृहे ददतु अथवा धारयन्तु । अत एव तेषां वस्त्राणि मलिनतायाः स्वेदस्य[२४] यूकादीनाञ्च[२५] निवासस्थानानि भवन्ति । कियती वर्णना क्रियताम् ? अन्नवस्त्रयोः कष्टस्य इयत्ता नास्ति ।

अन्न वस्त्रादीनाम् उत्पादनस्य साधनं वर्तते कृषिः । कृष्या न केवलं ग्रामीणा एव जना जीवन्ति प्रत्युत सम्पूर्णस्यापि देशस्य जीवनं कृष्या उपरि एव निर्भरं वर्तते । नगरेषु महामहान्तो धनसम्पन्ना जनाः सन्ति । ते सौधेषु[२६] निवसन्ति, गद्दिकासु[२७] शयनं कुर्वन्ति, यानेषु चलन्ति, बहुमूल्यानि वस्त्राणि धारयन्ति, महतो महान्ति च कार्यस्थानानि[२८] चालयन्ति परं जीवनाय तेषामपि कृते अन्नस्यैव आवश्यकता वर्तते ।

---

१५—दाल । १६—जाड़े में । १७—साड़ी । १८—सीने के लिये । १९—सुई । २०—डोरे का । २१—प्रयत्न करती हुई भी । २२—भेंट कर । २३—धोने के लिए । २४—पसीने का । २५—जूँ आदि का । २६—महलों पर । २७—गद्दियों पर । २८—कारखाने ।

परं कृषिकार्यमपि ग्रामेषु सम्प्रति साधनाऽभावात् अनेकविधकाठिन्याच्च सम्यक् प्रकारेण न भवति। बलीवर्दानाम् अभावात् सम्यक् कर्षणं न भवति क्षेत्राणाम्। समीचीनानि बीजानि न मिलन्ति। क्षेत्राणाम् उत्पादनशक्ति-वर्द्धनाय तेषु पर्याप्तं "खाद्यम्" अपेक्ष्यते परं तस्यापि अभाव एव वर्तते। गोमयैः बहुधा इन्धनकार्यं चलति। यानि वैज्ञानिकानि साधनानि विदेशेषु प्रचलन्ति तेषामपि अत्र प्रचारो नास्ति न च वैज्ञानिकी प्रक्रिया एव अवगता वर्तते अधिकांशानाम्। एवं न सम्यक् प्रकारेण सम्प्रति कृषिर्भवति न च पर्याप्तमन्नं समुत्पद्यते। तेन सम्प्रति यादृशी दशा ग्रामाणां सा सर्वेषामपि प्रत्यक्षा एवास्ति।

इमानि एव ग्रामाणां वर्तमानाया दुर्दशायाः मुख्यानि कारणानि सन्ति। एतदतिरिक्तम्—गोवंशस्य दिने दिने वर्द्धमानो ह्रासः, अभियोगप्रियता[१९], ऋणभारः, पारस्परिकं मनोमालिन्यम्, पक्षपातः, सहानुभूतेः सहकारितायाः राष्ट्रियभावनायाश्च अभावः, शिक्षितानां ग्रामेभ्यः उदासीनता च अस्या दयनीय-परिस्थितेः हेतवः सन्ति।

एभिः कारणैः ग्रामा ग्रामीणजनाश्च कीदृशीं दयनीयां दशां प्रापिताः सन्ति इति ग्राम-परिचितानां तिरोहितं[२०] नास्ति। जीर्ण-शीर्णानि गृहाणि, स्वल्पशस्यानि क्षेत्राणि, कृशकलेवरा बलीवर्दाः, अर्धनग्नाः स्त्रियः, अनशनक्लिष्टा बालकाः, दुर्गमाः मलिनाश्च मार्गाः, क्वचित् क्षुधा-पीडितानां रोदनम्, क्वचित् रोगार्तानां क्रन्दनम्, क्वचित् कलहायमानानां कलकलः, क्वचित् पुरुषाणां दण्डादण्डि, क्वचित् स्त्रीणां केशाकेशि, इदमेव साधारणतया ग्रामाणां ग्रामवासिनाञ्च चित्रमस्ति येषाम् उपरि सम्पूर्णस्यापि राष्ट्रस्य सौभाग्यं समुन्नतिश्च अवलम्बिता वर्तते। अतः सम्प्रति देशस्य समुन्नतये ग्राम-दशायां क्रान्तिकारिणः परिवर्तनस्य आवश्यकता वर्तते। जगतो जीवनभूताः

---

१९—मुकदमेबाजी का शौक। २०—छिपा हुआ।

कृषकदेवाना यावत् यथोचिता पूजा सम्मानश्च न भविष्यति तावत् अपेषामपि जीवन कष्टमयमेव स्थास्यति इत्यत्र सन्देहलेशस्यापि कृते अवसरो नास्ति। दौर्भाग्यस्य अय विषयो वर्तते यत् वय स्वराज्य लब्ध्वापि शासकाना प्रबन्धदोषात् दु खमेव सदा सहामहे। अत शासकसमुदायेन, नेतृवृदै, साधारणै जनैश्च अस्मिन् विषये शीघ्रमेव ध्यान दातव्य निम्नलिखितै उपायैश्च ग्रामाणाम् समुन्नतै चेष्टा कर्तव्या—

ग्रामे ग्रामे पाठशाला व्यायामशाला, औषधालया, पुस्तकालयाश्च स्थापनीया। चलचित्र प्रदर्शनद्वारा व्यवहारोपयोगिनो विषया· शिक्षणीया। उद्योगस्य व्यापारस्य गृहशिल्पनाञ्च प्रवर्तन विधेयम्। समये समये सभा कृत्वा विभिन्नविषयेषु व्याख्यानदानस्य योजना विधेया। 'पञ्चायत'' द्वारा न्यायपूर्वक विवादाना निर्णय कर्तव्य। प्रतिग्रामञ्च एक सार्वजनिक मन्दिर स्यात्। तत्र समये समये धार्मिकव्याख्यानस्य कीर्तनभजनादीना कथावाचनस्य च व्यवस्था कर्तव्या। स्वच्छताया स्वास्थ्यस्य च कृते समीचीन प्रबन्ध स्यात्। पर्वोत्सवादीन सामूहिकरूपेण मानितानि स्यु। कुमार्गगामिनो जना दण्डिता भवेयु। कुसस्काराणा कुरीतीना च निवारणाय उपदेशा दीयेरन्। कृषिकर्मण समुन्नतये वैज्ञानिकानि साधनानि वैज्ञानिकी प्रक्रिया च प्रसारिता भवेत्। यत्र एतादृशै उपायै ग्रामाणा वर्तमानदशाया पर्याप्त परिवर्तन करिष्यते[31] तदैव दशा नति भविता।

अत एव अथर्ववेदे ग्रामाणा कल्याणाय एषा प्रार्थना विहिता वर्तते यत्—

अस्मै ग्रामाय प्रदिशश्चतस्र
ऊर्जं सुभूत स्वस्ति सविता न कृणोतु॥
[ अथर्व, ६-४०-२ ]

---

३१—किया जायगा।

# समाज-संस्कारः ।

गुणा अथवा दोषा यथा कस्यचिद् व्यक्तेः अभ्युदयस्य अधःपतनस्य वा कारणानि भवन्ति तथैव समाजस्यापि । यथा कश्चित् जनो गुणैः वर्द्धते, प्रतिष्ठां प्राप्नोति, अभ्युदयं च गच्छति स एव कालान्तरे दोषैः हीयते अपमन्यते अथ पतनं च प्राप्नोति तथैव समाजेऽपि यदा गुणा भवन्ति तदा तस्य वृद्धिः सम्मानः समुन्नतिश्च जायते यदा च समाजे दोषा आयान्ति तदा तस्य शनैः-शनैः क्षयः तिरस्कारः अधःपतनं च जायते । अतो यथा व्यक्तेः अभ्युदयाय गुणानां ग्रहणं दोषाणां च परिवर्जनम् आवश्यकं भवति तथैव समाजस्यापि समुन्नतये गुणानाम् आनयनस्य दोषाणां दूरीकरणस्य च आवश्यकता भवति । इदमेव गुणानां ग्रहणं दोषाणां परिमार्जनं च संस्कार शब्देन व्यपदिश्यते । अयं च संस्कारो यथा व्यक्तीनां कृते परमावश्यको भवति तथैव समाजस्यापि कृते इति तु पूर्वं स्पष्टीकृतमेव । अत्र तु समाजसंस्कारसम्बन्धे एव किञ्चित् समुल्लिख्यते ।

इतिहासग्रन्थानाम् अध्ययनेन ज्ञायते यत् अस्माकं समाजः पूर्वं सर्वथा आदर्शसमाज आसीत् । सर्वेऽपि नरा नार्यश्च स्वस्वकर्तव्यं समुचितरूपेण पालयन्ति स्म । दुर्गुणेभ्यो दोषेभ्यश्च ते शतं क्रोशान्[1] दूरे तिष्ठन्ति स्म । न ते कदाचित् मिथ्या वदन्ति स्म नापि मिथ्या शपन्ति स्म । गृहे तालकम्[2] अदत्त्वैव जना बहिर्गच्छन्ति स्म परं चौर्यस्य नामापि न श्रूयते स्म । अन्यस्य धनं जना लोष्ठवत्[3] अवगच्छन्ति स्म[4], परस्त्रीषु मातृवत् व्यवहरन्ति स्म । व्यभिचारं महापातकं मन्यन्ते स्म ।

---

१—कोस । २—ताला । ३—ढेले के समान । ४—माताओं के ।

स्त्रिय पुरुषाः, सेवका स्वामिनः, पुरोधसो[५] यजमानाः, गुरव शिष्या, उत्तमर्णा[६] अधमर्णाश्च[७] परस्पर सर्वदैव यथोचित व्यवहार कुर्वन्ति स्म। अत एव समाजे अव्यवस्थायाः, अशान्तेः, उपप्लवस्य, पारस्परिक-विरोधस्य, अधिकारार्थं कलहस्य, सघर्षस्य च सर्वथा अभाव आसीत्। सर्वप्रकारेण समाजो निरुपद्रवः सुखी शान्तो धनधान्यसम्पन्नः स्वस्थः, सुव्यवस्थित, शिक्षित. समादरणीयश्च आसीत्। यद्यपि त्रिगुणात्मिकाया सृष्टौ न कश्चित् समाजः सर्वांशेन निर्दोषो विशुद्धश्च भवितुमर्हति तथापि अस्माक समाजस्य प्राचीन स्वरूप बहुधा निर्दोष निष्कलङ्कम् अनुकरणीयञ्च आसीदिति तु साभिमान वक्तु शक्यते। न च इद केवल वयमेव कथयामो नापि आत्मनो मिथ्याप्रशसा कुर्म प्रत्युत वैदेशिका अपि ये ये पक्षपातरहिता विद्वास. पर्यटका अस्मिन् देशे पर्यटनार्थं[८] समागताः तेऽपि अस्मत्स्य आदर्श-समाजस्य मुक्तकण्ठेन प्रशसा कुर्वन्त सन्ति इति तेषा पुस्तकानाम् अवलोकनात् सम्यक् अवगन्तु शक्यते।

पर साम्प्रतिक स्वरूप तु अस्मत्समाजस्य सर्वथा सदोष घृणास्पद च सञ्जात वर्तते। यथैव पूर्वं समुन्नतेः उत्तुङ्गशिखरे[९] समारूढमासीत् तथैव सम्प्रति अधोगतेः भयानके गर्ते[१०] पतित वर्तते। दृष्टौ प्रसारितायां सर्वत्र दोषा एव दृष्टिपथम् आयान्ति। समाजस्य सर्वविध कल्याणाय अस्माक प्राचीनैः समाजव्यवस्थापकैः ऋषि महर्षिभि आचार्यैश्च वेदशास्त्रादिषु ये ये नियमा या याश्च व्यवस्था निर्मिता आसन् तास्तु विलोप गता. तत्स्थाने च स्वास्थ्यस्य सदाचारस्य आर्यसभ्यतायाश्च विनाशका व्यवहारा. प्रचलिता दृश्यन्ते। प्रतिदिन बालविवाहस्य वृद्धविवाहस्य कन्याविक्रयस्य च अनेका घटना जायन्ते। मादकद्रव्याणा सेवन

---

५—पुरोहित। ६—साहु महाजन। ७—कर्जदार। ८—घूमने के लिये। ९—ऊँचे शिखर पर। १०—गड्ढे में।

समाजे प्रचलितमेव वर्तते । "सुर्ती तमाखू" भक्षणं तु परिष्टतसमाजेऽपि निष्कण्टकं प्रचलति । धार्मिकस्थानेषु अधार्मिका अविरतशो विराजन्ते । विद्यार्थिनां ब्रह्मचर्यं तु सहशिक्षया "सिनेमा" गृहेण च सुदूरम् अपसारितम् । निरक्षरभट्टाचार्या गुरवः सन्ति । साधवः स्वार्थपरायणा जाताः । ते गृहस्थेभ्योऽपि अधिकं कामिनी-काञ्चनादिकं सेवन्ते । धर्मस्थाने धर्मनाम्ना अधर्मस्य दम्भपाखण्डादीनाञ्च प्रचारो वर्तते । सन्तोषस्य तु नामापि न श्रूयते । सर्वे एव अन्यायेन धनोपार्जने हस्तौ पादौ प्रोटयित्वा प्रवर्तिताः सन्ति । इन्द्रियनिग्रहस्तु प्राचीनपुस्तकेष्वेव अवशिष्टो वर्तते । सर्वत्रैव असंयमस्य प्रमादो विलासितायाश्च वृद्धिः दृष्टिगोचरी भवति । मातापितृभक्तेः गुरुभक्तेश्च साम्प्रतं माहात्म्यं नास्ति । प्रमत्सरादीनां षड्वर्गाणां च परितः प्रभुत्वं वर्तते । छल-कपटादीनां सर्वत्र प्रचुरता वर्तते । आहार-विहारादीनां दूषिततया अस्वास्थ्यस्य दुर्बलतायाश्च साम्राज्यं वर्तते । अशिक्षा कुशिक्षा कुसंस्काराः कुरीतयश्च गृहे गृहे कृताधिकाराः सन्ति । कियतो दुर्गुणान् गणयामः ? एभिः, एतादृशैरेव अन्यैश्च अनेकैः दोषैः अस्माकं समाजः स्वस्थानात् रसातलं ग्रस्तो वर्तते । न च दोषाः केवलम् अशिक्षितसमाजे एव सन्ति प्रत्युत शिक्षित-समाजेऽपि अनेके महान्तो दोषा विद्यन्ते । महीयसीं विद्यां, महतो महत् च प्रतिष्ठितं पदं लब्ध्वा अपि अनेके महात्मानः कामक्रोधलोभादिना वशीकृतचेतसो निस्सारान् अनर्थान् कुर्वाणा विलोक्यन्ते । अहरहः पूजापाठादिकं कुर्वन्तः, सर्वाङ्गे चन्दनमाला धारयन्तः, सभासम्मेलनादिषु तारस्वरेण सनातनान् धर्मान् उपदिशन्तोऽपि जना प्रवञ्चना मिथ्याभाषण-लोभ-दम्भादिदोषैः कलुषीकृतान्तःकरणा दरीदृश्यन्ते । उपरि हसन् शुभ्रवेषधारिणः सभामञ्चे उच्छल्य उच्छल्य[11] सभ्यताया डिण्डिमघोषं कुर्वाणा अनेके नेतारः भाषाविशारदाश्च पुरुषा अन्तस्ततो नितान्तमेव मलिनाशया दुर्दशापन्नाश्च विलोक्यन्ते । एवं शिक्षि-

११—उछल उछल कर ।

तेषु अशिक्षितेषु, पुराणेषु नवीनेषु, सभ्येषु असभ्येषु च सर्वत्रैव दोषा दृष्टिपथम् आयान्ति। इमानि एव कारणानि सन्ति येन अस्माकं समाजस्य सम्प्रति एतादृशी शोचनीया दशा सञ्जाता वर्तते।

ऋते[12] एभ्यो दोषेभ्यः समाजे यत् आर्थिकं वैषम्यं वर्तते तदपि समाजस्य कृते साधारणं हानिकरं नाशकरं च नास्ति। अवलोकयन्तु नाम विषमताया विस्मयकरं चित्रम्? एकतस्तु कतिपये अङ्गुलिगणनीया धनकुबेरा महामहत्सु सुधाधवलितेषु प्रासादेषु[13] निवसन्ति अपरे च असंख्या निर्धना नरा नार्यः अस्वास्थ्यकरेषु जीर्णशीर्णेषु तृणकाष्ठादि-निर्मितेषु कुटीरेषु कथमपि कालयापनं कुर्वन्ति। एकत्र धनवन्तो जना नानाविधानि सुस्वादुभोजनानि दुग्धं दधि घृतादीनि च भुञ्जते अन्यत्र असंख्या जना एकवारं शुष्करोटिकाभ्योऽपि स्पृहयन्ते परं तेषां कृते तदपि सुलभं नास्ति। केचन सुमनोहराणि विविधानि वस्त्राणि धारयन्ति, विविधानि सुगन्धितैलानि लगयन्ति, बहुमूल्ये पादुके धारयन्ति, अनेकानेकानि च विलासवस्तूनि उपयुञ्जते अन्यत्र च अगणिता जना एकमेव वस्त्रं वर्षपर्यन्तं धारयन्ति, विपादिका[14] पीडिता अपि नग्नचरणा[15] एव परिभ्रमन्ति, शिरसि शरीरे च लगयितुं सर्षपस्यापि तैलं तेषां कृते दुर्लभं वर्तते। केषाञ्चित् मनोविनोदाय नानाविधानि नृत्य-गीत-नाटक प्रहसनादीनि साधनानि सन्ति अपरत्र असंख्यानां ग्रामवासिनां कृषकाणां मनोविनोदस्य कृते न तु किमपि साधनं वर्तते न च समयः नापि तदर्थं वित्तम्। वस्तुतस्तु अन्नचिन्ताऽऽतुराणां तेषां मनोविनोदस्य कृते जीवने अवसरोऽपि कदाचिदेव आयाति। केषाञ्चित् गृहे अधिकतया मोदकानां दुरुपयोगो भवति न्यचन च एकैकस्य कणस्य कृते लालायिता सन्ति। एवं केचन जना धनाधिक्यात् आवश्यकताया अपि अधिकं भोगविलासादिकं कुर्वते। अन्ये च असंख्येया जना दरिद्रतया

---

१२—अलावे। १३—महलों पर। १४—बेवाय। १५—नंगे पैर।

अन्ये पात्रयोरपि सुखेन वञ्चिता महाक्लेशमयं जीवनं यापयन्ति । इयं स्थितिरपि कस्याऽपि सभ्यसमाजस्य कृते श्लाघनीया नास्ति । एवं सामाजिकी धार्मिकी राजनीतिकी आर्थिकी च व्यवस्था विशृङ्खलिता जाता वर्तते । अत एव एषां दोषाणां निराकरणेन पुनरपि आदर्श-समाज-निर्माणस्य महती आवश्यकता वर्तते । यावद् इदं कार्यं न भवेत् एतेषाञ्च सर्वे दोषा न विनाश्यन्ते तावत् देशस्य दुःख दैन्यादिभ्यो मुक्तिः कदापि न भवितुमर्हति । अत एव आचार्यचाणक्येनोक्तम्—

व्यवस्थिताऽर्यमर्यादः कृत-वर्णाश्रम-स्थितिः ।
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति ॥

---

## पुस्तकालयः ।

सर्वेषां पठनाय यत्र पुस्तकानां संग्रहः क्रियते स पुस्तकालयः कथ्यते । शिक्षा-प्रसारस्य साधनेषु इदं श्रेष्ठतमं साधनमस्ति । जनतायां यथा पुस्तकालयानां द्वारा शिक्षाया अधिकाधिकः प्रसारो भवितुम् अर्हति न तथा अन्येन केनापि उपायेन । अत एव साम्प्रतं जनताया शासनस्य च पुस्तकालयानां स्थापने विशेषरूपेण ध्यानं गतं वर्तते ।

अस्माकं देशे तु शिक्षिता एव न्यूनाः सन्ति पर ये शिक्षिताः सन्ति तेषामपि पठनाय पर्याप्तानि पुस्तकानि न मिलन्ति । ज्ञातव्य-विषया अनेके सन्ति । धर्मः साहित्यम् दर्शनम् इतिहासः भूगोलः राजनीतिः कला वृत्तिः व्यवसायो विज्ञानञ्चेति एतादृशा विषयाः सन्ति येषां ज्ञानस्य पदे पदे आवश्यकता भवति । परन्तु एषु प्रत्येकस्यापि विषयस्य उपरि असंख्यानि पुस्तकानि लिखितानि सन्ति । दिने दिने च पुस्तकानां संख्या वर्द्धते एव । प्रतिवर्षं सहस्राणि नवीनानि पुस्तकानि

कारयन्ते। परन्तु नहि सर्वे स्वमूल्येन सर्वाणि पुस्तकानि क्रेतुं शक्नुवन्ति। विशेषतः साधारणा लोकाः। अनेके निर्धना छात्रास्तु पाठ्य-पुस्तकानामपि स्वद्रव्येण क्रयणे[1] असमर्था भवन्ति का पुनः वार्ता अन्य पुस्तकानां क्रयणस्य ?

शिक्षाप्रसारे इयं महती महीयसी बाधा अस्ति। परं पुस्तकालयानां प्रचारेण अस्याः सुगमतया एव निराकरणं कर्तुं शक्यते। सर्वेषां सहयोगेन सर्वेषां द्रव्यसाहाय्येन च पुस्तकालयस्य स्थापना भवति। तत्र भिन्न-भिन्न विषयाणां परःसहस्राणि पुस्तकानि सगृहीतानि भवन्ति। सर्वेषां पठने समानः अधिकारो भवति। किञ्चित् किञ्चित् मासिकं वार्षिकं वा शुल्कं दत्वा सर्वेऽपि पुस्तकालयात् पुस्तकानि स्वगृहे आनीय[2] पठितुं प्रभवन्ति। पुस्तकालये उपविश्य तु शुल्कं विनापि पुस्तकानि पत्राणि वा पठितुं शक्यन्ते। एवम् अतिस्वल्पेन व्ययेन धनिका दरिद्रा वा विद्यार्थिनः साधारणा वा जना विभिन्न विषयाणां ज्ञानं लब्धुं शक्नुवन्ति। यत्र पुस्तकालयो भवति तत्र अनिच्छया अपि ये जना गच्छन्ति तेऽपि किञ्चित् पठन्त्येव। यदि न पठन्ति तथापि पठने अभिरुचिस्तु उत्पद्यते एव। अनेन प्रकारेण सुगमतया समाजे शिक्षायाः प्रचारो भवति। अत एव पुस्तकालयानां महती उपयोगिता वर्तते।

अद्यावधि प्रायेण नगरेष्वेव पुस्तकालया स्थाप्यन्ते स्म[3] तेन च नागरिकाणामेव लाभो भवति स्म। परं प्रसन्नताया अयं विषयो वर्तते यत् सम्प्रति ग्रामेषु अपि शनैः शनैः पुस्तकालयानां प्रचारो वर्द्धमानो दृश्यते। इदं परमावश्यकमपि वर्तते। यतो हि भारतवर्षं ग्रामप्रधान-देशः अस्ति। अत्र ग्रामा एव अधिकाः सन्ति नगराणि च अतिन्यूनानि। अतो नगरापेक्षया ग्रामेष्वेव अधिका जना निवसन्ति। एवं च यदि ग्रामीणजनतायां शिक्षायाः प्रसाराय ग्रामे ग्रामे पुस्तकालया न स्थाप्यन्ते तदा भारतवर्षस्य वास्तविकी उन्नतिः कदापि भवितुं नार्हति। तस्मात्

१—खरीदने में। २—लाकर। ३—स्थापित किये जाते थे।

ग्रामेषु अपि पुस्तकालयाना महती आवश्यकता वर्तते । एव करणेन ये ग्रामीणा धनाभावात्, सत्यपि धने आलस्याद् वा स्वय पुस्तकानि क्रीत्वा[४] पठितु न पारयन्ति, इतस्ततो ग्राम ग्राम जल्प जल्पं वा वृथैव कालयापन कुर्वन्ति, आजीवन च साधारणेनापि उपयोगिना ज्ञानेन रहिता तिष्ठन्ति तेषामपि महान् लाभो भविष्यति, सर्वे एव च ग्रामवासिनो यत्किञ्चित् अवश्यमेव ज्ञान प्राप्स्यन्ति । अतो यदि वय सर्वत्र शिक्षाया पूर्णरूपेण प्रसार कर्तुं कामयामहे अशिक्षायाश्च सर्वतो नाश तदा अवश्यमेव ग्रामे ग्रामे पुस्तकालयाना स्थापनाय प्रयत्न कर्तव्य ।

परन्तु पुस्तकालयाना स्थापनेन सहैव तेषा सुव्यवस्थाया उपरि अपि पूर्णरूपेण ध्यान दातव्य भवति । यावत् सुव्यवस्था न भवति तावत् तेषा स्थापनात् कश्चित् विशेषलाभो न भवति । ग्रामेषु अनेके ईदृशा पुस्तकालया सन्ति ये एकवार तु सर्वेषा चरितेन उत्साहेन संस्थापिता परन्तु अग्रे तेषा दशा शोभना न विद्यते । न कश्चित् प्रबन्धको भवति नापि निरीक्षक, न उद्घाटनस्य[५] कश्चित् निर्धारित समयो भवति न च पिधानस्य[६] । केचन अनेकानि पुस्तकानि नयन्ति क्वचन एकमपि न प्राप्नुवन्ति । न पुस्तकाना सूचीपुस्तक समीचीन भवति नापि आदान प्रदानस्यैव । केचन पुस्तकानि स्वगृह नयन्ति पर पुन परावर्तयन्ति[७] नहि । गृहे एव रक्षन्ति गुप्त वा स्थापयन्ति । यस्तु पुस्तकालयस्य अधिकारी नियुज्यते[८] स स्वकीयमेव धन मत्वा यथा इच्छति तथा व्यवहरति । मया एकस्मिन् आपणे[९] एक पुस्तकालय स्थापित । पुस्तकानि सगृहीतानि । एक कायस्थकुलोत्पन्नो नवयुवक सञ्चालकपदे नियुक्त । एकस्या रात्रौ प्रमादात् तालकम् अलगयित्वा एव स गृह

---

४—खरीद कर । ५—खोलने का । ६—ब द करने का ।
७—लौटाते हैं । ८—नियुक्त किया जाता है । ९—बाजार म ।

तत्रत्य एव हिन्दी पाठशालाया
गत । तत अवसर दृष्ट्वा एक तत्रत्य एव हिन्दी पाठशालाया
शिक्षक सर्वाणि पुस्तकानि गृहीत्वा अन्यत्र प्रेषितवान् । प्रातः
सञ्चालकेन गृह शून्य दृष्टम् । तत स इतस्ततो मार्गणाम्[१०] आरब्ध-
वान् पर यदा कुत्रापि पुस्तकाना प्राप्तिर्न अभूत् तदा स्थाने[११] गत्वा
स्थानाऽधिपतिं निवेदितवान् । स्थानाधिपस्य आगमन श्रुत्वा तस्मिन्
आपणे यस्य यस्य समीपे पुस्तकालयस्य पुस्तकानि आसन् ते तानि
सर्वाणि अपि पुस्तकानि कूपे पातितानि अथवा अग्नौ ज्वालितानि ।
कैश्चित् च अतीव दूरे प्रेषितानि । एव सर्वोऽपि परिश्रमो निष्फलताम्
अगमत् । एतादृशी एव दशा दुर्व्यवस्था च प्रायेण बहूना पुस्तकाल-
याना दृष्टिगोचरी भवति ।

अत पुस्तकालय स्थापनेन सहैव तेषा सुव्यवस्थाया उपरि ध्यान-
दानस्य महती आवश्यकता अस्ति । शोभने स्वच्छ सुविस्तृते च भवने
पुस्तकालय स्थाप्येत । सज्जनो विनीतो मधुरभाषी जनप्रियश्च सञ्चालको
नियुक्त स्यात् । निर्धारिते समये उद्घाटन भवेत् निर्धारिते च समये
विधानम् । पुस्तकाना प्रदाने सर्वै सह समानरूपेण व्यवहारो विधीयत,
पुस्तकालयस्य कागद पत्रादिकं सर्वमपि सुव्यवस्थित रक्ष्येत, ग्रामीणजनाना
हृदये हठात् पुस्तक पत्रादि-पठनाय अभिरुचि उत्पादनीया । किमपि
पुस्तक केनापि यथा छिन्न भिन्न मलिन गोपितम् अपहृत च न भवेत्
तथा प्रयत्न कर्तव्य । उपयोगिना पुस्तकाना सग्रहो विधीयेत
न तु गणनायै[१२] निरर्थकानाम् । एव यदि सुव्यवस्था स्यात्
समये समये च निरीक्षण सम्पद्येत वार्षिकोत्सवश्च क्रियेत तदा एव
पुस्तकालयेभ्यो जनताया वास्तविको लाभो भविष्यति ।

आशासे इमान् सर्वान् लाभान् विचार्य सज्जना स्व स्व ग्रामे
पुस्तकालयाना स्थापनाय तेषा सम्यक् सञ्चालनाय च अवश्यमेव उद्योग

---

१०—खोज, तलाश । ११—थाने पर । १२—गिनती के लिये ।

करिष्यन्ति । वस्तुतस्तु सर्वेषा गृहे एकैको लघीयानपि पुस्तकालय आवश्यको वर्तते । शिक्षितानां ग्रामे तु एकेन पुस्तकालयेन भवितव्यमेव ।

---

# समाचार-पत्राणि ।

वैज्ञानिके अस्मिन् युगे ज्ञानप्रसाराय यानि यानि साधनानि आविष्कृतानि सन्ति तेषु समाचारपत्राणामपि प्रधानं स्थानं वर्तते । कस्याऽपि ज्ञातव्यविषयस्य अल्पीयसा कालेन व्यापकः प्रचारो यथा समाचारपत्रद्वारा कर्तुं शक्यते न तथा अन्येन केनापि उपायेन । अत एव ज्ञानविस्तारक्षेत्रे समाचारपत्राणां महती उपयोगिता वर्तते ।

समाचारपत्राणां जन्मकथा अतिपुरातनी नास्ति । अस्मिन् विषये प्रकाशितानां कतिपयलेखानाम् अवलोकनेन ज्ञायते यत् सर्वप्रथमं ख्रीष्टाब्दस्य एकादशे शतके चीनदेशे एतादृशं पत्रं प्रकाशितं बभूव । मुगलशासन-समये भारतवर्षेऽपि हस्तलिखितं संवादपत्रं प्रचलति स्म परं तत् केवलं शासनविभागे एव सीमितम् आसीत् । यूरोपे तु सर्वादौ समाचारपत्रस्य प्रादुर्भाव इटलीराज्यस्य "वेनिस" नगरे अभूत् । ततः परं जर्मनीदेशे तत्पश्चात् च इङ्गलैण्डे समाचारपत्रस्य प्रकाशनं प्रारब्धम् । अनन्तरं गौराङ्गेषु समागतेषु भारतवर्षेऽपि समाचारपत्राणां प्रचलनम् अभवत् । श्रूयते "समाचार दर्पण" नामकं पत्रं सर्वप्रथमं प्रचलितम् ततश्च शनैः शनैः अन्यानि पत्राणि प्रचलितानि । इदानीं तु भारतवर्षे एव प्रतिदिनं एतावन्ति[1] पत्राणि प्रकाशितानि भवन्ति येषां संख्या काठिन्येन कर्तुं शक्यते । इदानीं निखिलमपि भूमण्डलं समाचारपत्रैः परिव्याप्तं वर्तते ।

---

[1]—इतने ।

पत्राणि अपि दैनिक-साप्ताहिक-पाक्षिक-मासिक-पाण्मासिक वार्षि-कादिभेदेन विषयभेदेन च अनेकप्रकाराणि सन्ति। एषां मध्ये दैनिकेषु साप्ताहिकेषु च पत्रेषु विशेषरूपेण समाचारा एव प्रकाशिता भवन्ति पर मासिकादिषु पत्रेषु ॥ बाहुल्येन विभिन्नविषयेषु निबन्ध प्रबन्धा एव प्रकाश्यन्ते।

वर्तमानयुगे इमानि पत्राणि मानवसमाजस्य यावतः उपकारान् कुर्वन्ति तेषाम् इयत्ता नास्ति। बाल्यकाले ये जनाः पूर्णशिक्षां न लब्ध-वन्त ते॒ऽपि समाचारपत्राणां प्रतिदिनं पठनेन अनेकविषयाणां ज्ञानं लब्धुं शक्नुवन्ति। तथैव पूर्णशिक्षितानामपि कृते पत्राणां महान् उपयोगो वर्तते। दैनिकसमाचाराणां परिज्ञानम्, विविधविषयेषु लिखि-तानां निबन्धानां पठनम्, नानाविधानां चित्राणां निरीक्षणम्, सामयिक-परिस्थिति-परिज्ञानम्, प्रकाशितानां प्रकाश्यमानानाञ्च नूतन नूतनानां ग्रन्थानां पत्रपत्रिकादीनाञ्च परिचयः, विविध सिद्धान्तानामध्ययनम्, मनोरञ्जनैर्लेखैः मनोविनोदनम्, स्वाभिप्रायप्रकाशने कौविद्यम् परस्पर विचाराणां विनिमयश्चेत्यादयः अनेके लाभाः सन्ति। समाचारज्ञाना-तिरिक्तं पत्र पत्रिकादीनां पठनेन अवश्यानां नित्यप्रयोजनीय विषयाणां सम्बन्धे ज्ञानं जायते। यथा—राजनीतिः, समाजनीतिः ; धर्मः, दर्शनम्, स्वास्थ्यम्, साहित्यम्, इतिहासः, भूगोलः, आयुर्वेदः, क्रीडाकौतुकादिकम्, वाणिज्यम्, विज्ञानञ्च। एषु विषयेषु यादृशा महत्त्वपूर्णा सारगर्भिता लेखा आलोचना वा पत्रपत्रिकादिषु निःसरन्ति तेषाञ्च पठनेन यादृशं ज्ञानं जायते तत् अन्यसाधने सर्वथा असाध्य वर्तते। अतो विद्याया उन्नतौ ज्ञानस्य प्रचारे च अवर्णनीया उपकारिता पत्राणाम्।

शासनविषयेऽपि पत्राणि इमानि महत् साहाय्यं कुर्वते। शासन-विभागतो या काचन नवीना व्यवस्था धारा वा जनतायाः कृते निर्मिता भवति तस्याः पत्रादिद्वारा एव जनताया प्रचारः क्रियते। अनेन उपायेन जनताऽपि शीघ्रमेव राजकीयां व्यवस्थाम् आदेशं वा ज्ञात्वा

तदनुकूलम् आचरति । अथ च यदा कस्मिंश्चित् विवादास्पदे विषये जनताया मतामत-परिज्ञानस्य आवश्यकता भवति तदानीमपि समाचार-पत्राणि महत् साहाय्यं कुर्वन्ति । एतदतिरिक्तम्-यदा केचन शासनाधिकारिणो यथेच्छमाचरन्ति, अनुचितं कुर्वन्ति, अन्यायम् अत्याचारं वा विदधति तदा पत्राण्येव समालोचना द्वारा जनमत प्रकाशनद्वारा च तेषां नियन्त्रणे दोषदूरीकरणे च समर्थानि भवन्ति । एवमेव व्यापारक्षेत्रेऽपि अनेकविधा उपयोगिता वर्तते पत्राणाम् ।

परन्तु यथा संसारस्य किमपि वस्तु सर्वथा निर्दोषं नास्ति तथैव पत्राणि अपि सर्वथा दोषरहितानि न सन्ति । अतः उपकारस्थाने यदा-कदाचित् अपकारमपि जनयन्ति । मिथ्यासमाचाराणां प्रकाशनेन भ्रान्ति-जननम्, पक्षपातपूर्णलेखानां प्रचारेण पारस्परिक विद्वेष-वर्द्धनम्, ईर्ष्या-द्वेषमयीभिः समालोचनाभिः साहित्यिकक्षेत्रे कटुतायाः उत्पादनम्, अश्लीलविज्ञापनानां प्रकाशनेन समाजे नैतिकतायाः अधःपतनमित्यादयः पत्रपत्रिकादीनां कतिपये दोषाः सन्ति । यदि इमे दोषा न स्युः यदि च सम्पादकमहाभागा निर्दोषसम्पादने समधिकं ध्यानं दद्युस्तदा पत्राणि-भिर्यथा जगतो महीयान् उपकारः कर्तुं शक्यते न तथा अन्येन उपायेन इत्यत्र नास्ति सन्देहलेशोऽपि ।

एवं निर्विवादं सिद्धेऽपि पत्राणामुपयोगित्वे यथा एतेषां सुन्दरं प्रकाशनं यथा व्यापकः प्रचारो यथा च सम्पादकानां लेखकानां च आर्थिकी अवस्था अपेक्ष्यते तथा नास्ति । परन्तु अवसानं गता सम्प्रति अस्माकं परतन्त्रतायाः कराला कालरात्रिः । समागता च स्वातन्त्र्य-सूर्योदयवेला । तद् आशास्महे यत् स्वतन्त्रे भारते यथा अन्यक्षेत्रेषु समुन्नतिं विधास्यते तथैव पत्रपत्रिकादीनामपि दशा दिने दिने समी-चीनतां यास्यति इति ।

---

# विज्ञानस्य उपयोगिता ।

मानवसमाजस्य सर्वविध सुखाय यानि यानि शास्त्राणि प्रणीतानि सन्ति तेषु विज्ञानशास्त्रस्यापि महत्त्वपूर्णं स्थानं वर्तते । विज्ञान हि जगत सर्वेषामपि भौतिकपदार्थाना सुपरीक्षण कृत्वा, अर्थात् कस्य पदार्थस्य कि स्वरूपम्, तस्मिन् च गुणा, का शक्ति, कुत्र वा तस्य उपयोग कर्तव्य इत्यादि विषयाणा सूक्ष्मरूपेण निरीक्षण कृत्वा तत्तद्वस्तूना यथोचित रूपेण समाजस्य उपकारे विनियोग करोति । यदि विज्ञानशास्त्र न स्यात् विज्ञानकदृष्ट्या च सर्वेषा पदार्थाना तात्त्विक ज्ञान न स्यात् तर्हि समाजो भौतिकपदार्थानामुपयोगेन रहित एव तिष्ठेत् जीवने च पदे पदे महतीं कठिनताम् अनुभवत् ।

विज्ञानशास्त्रस्य अनेके भेदा सन्ति । यथा—ज्योतिर्विज्ञानम्, आयुर्विज्ञानम्, वनस्पतिविज्ञानम्, शारीरविज्ञानम्, भौतिकविज्ञानञ्चेति । अस्माक पूर्वजै आचार्यै ऋषिमहर्षिभिश्च विज्ञानशास्त्रस्य निर्माणे महती समुन्नति विहिता आसीत् । जीवानाम् आध्यात्मिकसुखाय यथा उपनिषदादीना दर्शनशास्त्राणा च तै रचना कृता यथा वा रसानुभूतये साहित्यस्य विभिन्नानाम् अङ्ग प्रत्यङ्गाना निर्माण कृत तथैव भौतिकसुखाय विविधविज्ञान शास्त्राणामपि महता परिश्रमेण सम्पादन कृत्वा जगतो महान् उपकार साधित । एतदर्थमेव आयुर्वेद, धनुर्वेद, स्थापत्य सङ्गीतशास्त्र ज्यौतिषशास्त्र च, इत्यादीनि नानाविधानि शास्त्राणि विरचितानि । एतदतिरिक्तम् विविधयन्त्राणा साहाय्येन जलयानानिर्माणे विमाननिर्माणे नानाविध शस्त्रास्त्रादिनिर्माणेऽपि तै महत् कौशल दर्शितम् । यद्यपि अनेकानि वैज्ञानिकपुस्तकानि विलोप गतानि तथापि यावन्ति इदानीं मिलन्ति तेषामेव अवलोकनेन ज्ञायते यत् अस्यशास्त्रे

-इह विज्ञानशास्त्रस्य बहूनां वैज्ञानिकानां सिद्धान्तानां चापि अस्मत्पूर्वजैः बहोः कालात् पूर्वमेव आविष्कारो विहित आसीदिति ।

परन्तु अस्मिन् समये विज्ञानशास्त्रस्य महती समुन्नतिः सर्वतोऽधिका च समृद्धिः सञ्जाता वर्तते । अस्माकं पूज्यपादैः महर्षिवर्यैः रोपितो विज्ञानवृक्षः सम्प्रति वैदेशिकानां विदुषां प्रयत्नेन पूर्णतया अङ्कुरितः पुष्पितः पल्लवितो फलितश्च अनेकाऽनेकः शाखा प्रशाखादि-समन्वितः महाविशालकायो महान् आनन्दप्रदश्च सञ्जातो वर्तते । विज्ञानशास्त्रस्यैव समुन्नतेरयं परिणामो वर्तते यत् इदानीं विश्व-विस्मयकराणि नानाविधानि यन्त्राणि विविधाश्च नवनवा आविष्कारा दृष्टि-गोचरी भवन्ति । यदिदानीं स्वल्पकायः स्वल्पबलश्च मानवो जले स्थले आकाशे च अप्रतिहतं राज्यं कुरुते तत् विज्ञानस्यैव प्रभावेण । विज्ञान-बलेनैव अगम्यमपि सुगमं, असाध्यमपि सुसाध्यम्, अलभ्यमपि सुलभम्, अदृश्यमपि प्रत्यक्षं कर्तुं शक्नुवन्ति जनाः । अथ गमने आगमने, भोजने पाने, क्रीडायां कौतुके, खेलने कूर्दने, पठने लेखने, व्यवसाये वाणिज्ये, किमधिकं जीवनस्य सर्वेष्वपि क्षेत्रेषु यदस्माभिः महत् सौविध्यं सुखञ्च अनुभूयते तत्र विज्ञानमेव हेतुः ।

अथ च न केवलं विज्ञानं जनतायाः शारीरिक-सुखं शान्तिमात्रमेव सम्पादयति अपरन्तु अज्ञानान्धकारं दूरे कृत्वा ज्ञानालोकविस्तारेऽपि अस्य महानुपयोगो वर्तते । पूर्वं जनाः गुरुमुखात् श्रावं श्रावं हाथपत्रेषु वा लिखितानि पुस्तकानि पठित्वा ज्ञानलाभं कुर्वन्ति स्म । अतः सर्व-साधारणे शिक्षायाः व्यापकरूपेण प्रचारः सर्वथा दुष्करः आसीत् । परं सम्प्रति तु मुद्रायन्त्रसाहाय्येन संसारस्य सर्वेऽपि नरा नार्यश्च नानाविधानि पुस्तकानि पठित्वा सुलभतया एव यथेच्छं ज्ञानलाभं कर्तुं शक्नुवन्ति । संसारस्य सर्वेषु मुद्रायन्त्रेषु प्रतिदिनं यावन्ति पुस्तकानि प्रकाशितानि भवन्ति तेभ्यश्च ज्ञान विज्ञानविस्तारे शिक्षाप्रचारे च यावान् लाभो भवति तस्य इयत्ता नास्ति । एतदतिरिक्तं समाचारपत्रद्वारा यद् वयं

अतिदूरस्थमपि नूतनात् नूतनं समाचारं स्वल्पकालेन एव लभामहे यच्च गृहस्थितैरेव अस्माभिः देशविदेशानां वार्ता व्याख्यानानि गीतानि च श्रूयन्ते तद् विज्ञानशास्त्रस्यैव वरदानमस्ति ।

एवञ्च अद्यावधि विज्ञानबलेन आविष्कृतानां नवनवाऽविष्काराणां दैनिककार्योपयोगिनां विविधवस्तूनाञ्च उपरि यदा दृष्टिपातः क्रियते तदा विस्मय मुग्ध मानसा भवामः । पर विज्ञानस्य एतावतैव कार्यं समाप्त नास्ति । विभिन्नदेशेषु अद्यापि परःशता वैज्ञानिकाः प्रयोगशालासु नवनवतत्त्वान्वेषणे नवनवयन्त्रनिर्माणे च अहोरात्र व्यापृताः सन्ति । वैज्ञानिकी उन्नतिरेव सम्प्रति सर्वोच्चसभ्यताया निदर्शनमस्ति । येन देशेन विज्ञाने यादृशी समुन्नतिर्विहिता स देशः तेनैव अनुपातेन सभ्यो मन्यते । अत एव सम्प्रति सर्वेऽपि वैज्ञानिके एव कार्ये प्राधान्येन संलग्नाः सन्ति । अतोऽनुमीयते यत् इतोऽपि अधिकाधिकं चमत्कारं दर्शयिष्यति विज्ञानशास्त्रमिति ।

परन्तु विज्ञानशास्त्रद्वारा अनेकानेकेषु उपकारेषु जायमानेष्वपि ये केचन महान्तः अपकारा अपि दृष्टिपथमायान्ति तेषामपि चर्चा अवश्यकरणीया अस्ति । सुखेन सहैव यदिदानीं नानाविधैः नवनवैः रोगैर्जना अनुदिनं असमये एव मृत्युमुखे गच्छन्ति, विषयाभिलाषदग्धैः विविधैर्विलासमयैः वस्तुभिः समाकृष्टचेतसो नरा नार्यश्च यदिदानीं विलासवह्नौ स्वकीयं स्वास्थ्यम् आरोग्यं सच्चरित्रता च जुह्वत[1] दृश्यन्ते, यच्च नवाविष्कृतैः महाभयङ्करैः मारणास्त्रैः क्षणमात्रे लक्षलक्षाधिकाः प्राणिनो निर्मम मार्यन्ते गगनचुम्बिनश्च विशाल विशाला. सौधा धराशायिनो विधीयन्ते तदपि विज्ञानस्यैव साहाय्येन । एव लाभेन सहैव अनेका हानयोऽपि विहिता विज्ञानेन । पर तत्र विज्ञानस्य दोषो नास्ति अपि तु व्यवहारकर्तॄणा दोषो वर्तते । लाभकरस्यापि वस्तुनो दुरुपयोगेन हानय. सम्भाव्यन्ते । मार्गे कुक्कुरादिभ्यः आत्मरक्षार्थं दण्डधारणस्य उपयोगिता न केनापि अस्वीकर्तुं शक्यते । आवश्यक तत् । परन्तु यदि

१—हवन करते हुए ।

कश्चित् दण्डधारी पथिकः तेनैव दण्डेन आगत्य सर्वैः सह युद्धं पाप
प्रतिघातं च कर्तुमारभेत तर्हि स एव रक्षणार्थं रक्षितो दण्डः तस्य
नाशकारणं भवितुमर्हति। सा एव दशा इदानीं विज्ञानस्य अस्ति।
अर्थकामयोः दासभूता सर्वे एव जनाः सम्प्रति स्वार्थसिद्धये विज्ञानस्य
दुरुपयोगं कुर्वाणा दृश्यन्ते। यदि जनानां शान्तिप्रिया बुद्धिः स्यात् यदि च
विज्ञानस्य सदुपयोगो विधीयेत तर्हि विज्ञाने न कोऽपि दोषो द्रष्टुं शक्यते।

अत एव अस्माकं शास्त्रेषु भौतिकविज्ञानेन सह आध्यात्मिकज्ञान
स्यापि आवश्यकता प्रतिपादिता वर्तते। अत एव च पुरुषार्थेषु अर्थ-
कामाभ्यां सह धर्ममोक्षयोरपि अपरपरतन्त्रतां प्रतिपादयन्ति शास्त्राणि।
यदि आध्यात्मिकज्ञानरहितं भौतिकविज्ञानं भविष्यति यदि च धर्ममोक्ष-
बुद्धिं परिहाय केवलम् अर्थकामयोः कृतेऽर्थं जनाः प्रवर्तिष्यन्ते तर्हि अनर्थ-
परम्परा अवश्यम्भाविनी। यदि जनेषु आध्यात्मिकं ज्ञानं स्यात्-सर्वेऽपि
वयं मानवा भ्रातरः, सर्वेऽपि समानाः, एकस्यैव परमात्मनः प्रजाः, अतः
सर्वैरपि अस्माभिः भ्रातृवद् वर्तितव्यम्, न परस्परं वैरं कर्तव्यं नापि
विरोधः—यदि ईदृशी सद्बुद्धिः उदियात् तर्हि विज्ञानं विनाशकं भवि-
तुमर्हति। न केवलं अध्यात्मज्ञानेनैव न वा केवलं भौतिकविज्ञानेनैव
संसारस्य पूर्णतया कल्याणं भवितुमर्हति। यदा ज्ञानं विज्ञानञ्च उभयमपि
समन्वितं युगपद् सहकारि च भवति तदैव संसारस्य पूर्णरूपेण
अभ्युदयो भविष्यति सर्वेषां च सुख-शान्तिमयानि दिनानि आयास्यन्ति।
अतो विज्ञानेन सहैव देशे आध्यात्मिकज्ञानस्यापि अपि प्रगतिः
कर्तव्या एव च अर्थकामाभ्यां सह धर्ममोक्षयोरपि आवश्यकता अव-
गन्तव्या येन विज्ञानं विशुद्धरूपेण जनानाम् उपकारे सक्षमं स्यात्।

आशास्महे स्वतन्त्रतां प्राप्तो भारतवर्षः पुराकाल इव इदानीमपि ज्ञानेन
सहैव विज्ञानेऽपि सततामुन्नतिं कृत्वा उभयोरपि सामञ्जस्येन सन्देशं
दास्यति सकलेऽपि विश्वे स्थायिनीं शान्तिं स्थापयिष्यति इति।

---

# व्रतोत्सवानाम् उपयोगः ।

अस्माक वैयक्तिकजीवनस्य सामाजिकजीवनस्य वा हिताय अभ्युद-
याय च धर्मग्रन्थेषु ये ये विषया निर्धारिताः सन्ति तेषु व्रतानाम् उत्स-
वानाञ्च अतीव महत्त्वपूर्णं स्थान वर्तते । एतेषा विविध-व्रतोत्सवानाम्
यदि विधिपूर्वकम् अनुष्ठान पालन च क्रियेत तदा तेभ्यो नानाविधा
लाभा भवितुमर्हन्ति । मनसि पवित्रता आयाति । पुरातनकथाना स्मरण
जायते । सयमशक्तिः वर्द्धते । सघटनात्मको भावो जागर्ति । महान् समु-
ल्लासो भवति । अन्ये च अनेके लाभा भवन्ति । अत एव अस्माक
पूर्वजै ईदृशानि अनेकानि व्रतानि उत्सवदिनानि च निर्धारितानि ।
एवमेव अन्यान्यधर्मेषु अपि व्रतोत्सवाना विधानम् अवलोक्यते ।

व्रतानि अनेकविधानि सन्ति । कानिचित् नित्यानि, कानिचित्
नैमित्तिकानि कानिचित् च काम्यानि । नित्यानि व्रतानि सर्वदैव विधी-
यन्ते यथा एकादशीव्रतम् । यानि व्रतानि केनापि निमित्तेन क्रियन्ते
तानि नैमित्तिकानि कथ्यन्ते यथा चान्द्रायणादिकम् । यानि च कस्या
अपि कामनाया. पूर्तये क्रियन्ते तानि काम्यव्रतानि भवन्ति । यथा पुत्र-
कामनया । एषु नैमित्तिकानि काम्यानि च व्रतानि तु आवश्यकतानुसार
यदा कदाचित् विधीयन्ते । पर नित्यव्रतानि तु सर्वदैव सर्वैरपि नियमा
नुसार कर्तव्यानि इति शास्त्रकाराणामादेशो वर्तते । अत एव अधा-
र्मिकेऽपि अस्मिन् युगे परम्परया अद्यापि अनेकानि व्रतानि नर-नारी-
समाजे प्रचलितानि सन्ति । स्त्रियस्तु तत्रापि विशेषरूपेण व्रतानुष्ठाना-
दिक कुर्वन्ति ।

व्रतदिवसेषु पालनार्थं ये ये नियमा निर्मिता सन्ति तेषा सम्यक्
यदि पालन क्रियेत तदा सत्यमेव अनेके लाभा भवितुमर्हन्ति इति आधु-
निका अपि मन्यन्ते । व्रतेषु किल आहारविहारादिविषये सयमस्य उपरि

विशेषरूपेण ध्यानं दातव्यं भवति। आहारे, शयने, भाषणे, हासे, सर्वत्रैव संयमः रक्षणीयो भवति। एतेन संयमशक्तिः वर्द्धते। आहारनिरोधेन स्वास्थ्यं समीचीनं तिष्ठति। उदरविकाराश्च नश्यन्ति। इन्द्रियसंयमेन च मनोविकारा नश्यन्ति। धार्मिकग्रन्थानां पाठेन कीर्तनभजनादिना च मनसि धार्मिको भावः समुदेति। चेतसः चञ्चलता नश्यति, अपूर्वा शान्तिः समायाति। प्रतिपक्षम् एकस्मिन् अपि दिने यदि ईदृशी साधना विधीयेत तदापि आत्मनो बहुकल्याणं कर्तुं शक्यते।

एवमेव उत्सवा अपि बहुविधाः सन्ति। यथा श्रीकृष्ण जन्माष्टमी, रामनवमी, नवरात्रम्, रथयात्रा, विजयादशमी, दीपावली, सरस्वतीपूजा, दुर्गापूजा इत्यादयः। एतेभ्यः उत्सवेभ्यो व्यक्तिगतलाभापेक्षया सामाजिको लाभः प्रचुरो वर्तते। उत्सवेषु सर्वे सम्मिलन्ति, सर्वे सङ्गच्छन्ते सर्वे च सहयोगेन परस्परं कार्याणि अनुतिष्ठन्ति। एतेन पारस्परिकं वैरविद्वेषादिकं नश्यति, स्नेहः सौहार्दं सामञ्जस्यं सहकारिता च संवर्द्धते। संघटनात्मकश्च भावो जागर्ति। अथ च उत्सवैः समाने सर्वत्रैव सुमहान् आनन्दसन्दोहः समुल्लसति। नीरसे निरानन्दे च जीवने काचित् अपूर्वा सुप्रसन्नता समायाति। नृत्यगीतवाद्यादिना, सुहृत्समागमेन, परस्परालापेन, क्रीडाकौतुकादिना, प्रियजनानां स्वागतसम्भाषणाभ्यां च सर्वे एव नराः, नार्यः, बालकाः, वृद्धाश्च परमानन्दमग्नाः प्रमुदितमानसाश्च इतस्ततो हसन्तः, खेलन्तः, क्रीडन्तः, गायन्तः, वादयन्तः, नृत्यन्तः, प्रमोदमानाश्च दृश्यन्ते। उत्सवदिनेषु बालकानाम् उल्लासस्तु दर्शनीय एव भवति। ते हि चित्रविचित्राणि नानारागरञ्जितानि वस्त्राणि परिधाय[1] मोदकानां क्रयणाय[2] इतस्ततः पणानि[3] एकत्रकुर्वाणा उत्सवे सम्मिलनार्थं क्षुधापिपासादिकं विस्मरन्ति। पदातयश्च महता उत्साहेन वेगेन च उत्सवस्थले गच्छन्ति। एवञ्च

१—पहनकर। २—खरीदने के लिये। ३—पैसे।

उत्सवदिनानि नानाविधदुःखदैन्यादि कारणेषु सत्स्वपि किञ्चित्कालार्थं महान्तमानन्दं जनयित्वा महान्तमुत्साहं समुत्पादयन्ति ।

एतदतिरिक्तम् एकः अन्योऽपि महान् लाभो वर्तते । ये ये उत्सवाः सन्ति ते सर्वेऽपि जातेः समाजस्य राष्ट्रस्य च हितदृष्ट्या प्रचारिताः सन्ति । तेषाम् एकमेकम् उद्देश्य वर्तते । यदि तदनुसारं सर्वेऽपि उत्सवा मान्येरन् तदा समाजस्य राष्ट्रस्य च महान् लाभः स्यात् । द्वित्राणि उदाहरणानि गृह्यन्ताम् ।

अस्मत्समाजे एको 'दुर्गापूजोत्सव' प्रचलति । बङ्गेषु अस्य महान् प्रचारो वर्तते । अस्य उत्सवस्य उद्देश्य समाजे शारीरिकशक्ति-वर्द्धन प्रचारो वर्तते । अस्य उत्सवस्य उद्देश्य समाजे शारीरिकशक्ति-वर्द्धनं दुष्टदमनञ्च । अस्मिन्नुत्सवे महाचण्डिकाया मूर्तिः निर्मीयते । देवी दशभुजान् धारयति । प्रतिभुजं विभिन्नानि शस्त्रास्त्राणि भवन्ति । भयङ्कराकारः सिंहः तस्या वाहनं भवति । महिषासुर सम्मर्दं भगवती अन्येषामपि असुराणां विनाशाय विराजमाना तिष्ठति । इदं मूर्तेः स्वरूपं वर्तते । एतदतिरिक्त उत्सवेऽस्मिन् जना अस्त्रशस्त्रादि-चालनस्यापि अभ्यास कुर्वन्ति । एतत्सर्वं किं सूचयति ? एतदेव यत्—यदि आत्मनः समुत्कर्षं शत्रूणां च विनाशः अभीप्सितः स्यात् तर्हि शक्तेरुपासना विधेया । शस्त्रास्त्राणि सर्वे धारणीयानि । तथा च बलोपार्जनं कर्तव्यं येन सिंहसदृशा अपि बलवन्तो वशीभूता भवेयुः, महिषासुरसमानाश्च जगत शान्तिविघातका उद्दण्डा दुर्दान्ता दुराचारिणोऽपि पादाभ्यां सम्मर्दिताः स्युः । यदा समाजस्य सर्वेष्वपि पुरुषेषु स्त्रीषु च अयं भाव समागमिष्यति तथैव च ते समाचरिष्यन्ति तदैव आत्मनो धर्मस्य जाते राष्ट्रस्य मर्यादायाश्च सुरक्षा कर्तुं शक्यते न अन्यथा ।

द्वितीयमुदाहरणं गृह्यताम् । एतदनन्तरं कार्तिके दीपावली महोत्सवः समायाति । अस्मिन् उत्सवे सर्वेऽपि जना निजनिजगृहाणां संशोधन-सम्मार्जनादिकं कुर्वन्ति । साधारणा गृहस्था गोमयादिना गृहं लेपयन्ति धनिकाश्च स्वस्वभवनानि चूर्णैः चमत्कृतानि कुर्वन्ति । संशोधिते

सुसम्मार्जिते सुलिप्ते समलङ्कृते च गृहे लक्ष्म्या पूजनं भवति । सर्वत्र च दीपमाला प्रज्वलिता क्रियते । अनन्तरं वणिजः स्वकीयं वार्षिकं आयव्ययादिकं गणयन्ति । द्यूतादिना बहवो निजभाग्यपरीक्षां कुर्वते । तस्या एव रात्रेः अन्तिमे प्रहरे शूर्पाणि वादयन्त्यो गृहिण्यो गृहात् दरिद्रतायाः निस्सारणं कुर्वन्ति । सर्वामपि निशां पूजापाठादिना आमोदप्रमोदाभ्यां च जना अतिवाहयन्ति । अयं सर्वोऽपि कार्यकलापः किमुद्दिश्य प्रकटीकरोति ? इदमेव यत् कस्यापि पुरुषस्य परिवारस्य जातेः राष्ट्रस्य वा प्रभूतं वित्तवैभवं विना जीवनं न स्थातुमर्हति । अत उभौ अपि यथाशक्ति विविधैरुपायैः धनोपार्जनस्य दरिद्रताया निस्सारणस्य च उपाया विधेया येन सर्वेषामपि जीवनं सुखमयं शान्तिमयं सम्मानमयं च सम्पद्येत ।

अथ वसन्तपञ्चमी श्रूयताम् । अस्मिन् उत्सवे किं भवति ? बुद्धिदेवताया श्रीसरस्वत्याः शान्तिमाधुर्यमयी मनोहरा मूर्तिः निर्मीयते । शारदा नीरक्षीरविवेककला कुशलस्य हंसस्य उपरि विराजते । एकस्मिन् हस्ते सकलजनमनोविनोदिनी वीणा अपरस्मिन् च अज्ञानान्ध निवारकं ज्ञानालोकप्रसारकं पुस्तकम् । अस्मिन् दिने च प्रातःकालादेव सरस्वती-पूजनं पुस्तकपत्रादिपूजनं च भवति । ज्ञानोपासकानां विदुषां विद्यार्थिनाञ्च समुदायो महता समारोहेण उत्सवमिमं सुसम्पन्नं विदधाति । एतेन किं प्रकटीभवति ? विद्योपार्जनस्य आवश्यकता । एष महोत्सवः सन्देशमिमं ददाति यत् सत्ये शिवे च सत्यपि यावत् देशे विद्यायाः प्रचारो न भविष्यति सर्वे च जना नारीश्च सरस्वत्याः पूजकाः अर्थात् सुशिक्षिताः क्रियावन्तो बुद्धिविवेकशीलाश्च न भविष्यन्ति तावत् राष्ट्रकल्याणं सर्वथा असम्भवं वर्तते ।

एवमेव होलिकोत्सवः समागते वर्षे सर्वे पारस्परिकं रागद्वेषा-दिकं प्रत्यज्य सर्वथा सुसम्मिलितैः आमोदप्रमोदव्यापारैः स्नेह-बन्धं दृढं कुर्वन्ति । अनेनैव प्रकारेण सर्वेऽपि उत्सवाः अस्मिन् भवति

सन्देशमिव दातुं, किमपि शिक्षयितुं, किमपि च स्मारयितुमिव समायान्ति। अत एव यदि यथाविधि महोत्सवाः सम्मानिताः स्युः तदा राष्ट्रस्य महान् लाभो भवितुमर्हति। एवमेव येषाञ्चित् महापुरुषाणां ये ये जन्मोत्सवा जायन्ते तैरपि सामाजिकजनेषु कृतज्ञताबुद्धिः, स्फूर्तिः, उत्साहश्चेत्यादयो अनेके लाभाः सम्भवन्ति। इमानि एव फलानि उद्दिश्य व्रतोत्सवानां विधानं कृतं शास्त्रेषु। अतो यथासम्भवं विधिपूर्वकं व्रतोत्सव-प्रचाराय प्रयत्नो विधेयः। तथा च लिखितं बृहद्धर्मपुराणे—

कुर्याद् गृहस्थः सर्वथा देवानामुत्सवक्रियाम्।

सम्प्रति व्रतोत्सवानां यत् स्वरूपं समाजे प्रचलितं वर्तते तत् सर्वथा निरर्थकं दूषितं विधिहीनं च वर्तते। अत एव यथा लाभा अपेक्ष्यन्ते तथा न भवन्ति। न जना विधिपूर्वकं श्रद्धया भक्त्या च व्रतानि कुर्वन्ति न च उत्सवेषु सामूहिकरूपेण परस्परं सम्मिलन्त्येव। नाममात्रं सर्वमनुष्ठीयते। अतः समाजसुधारकाणां धार्मिकाणां च इदं प्रथमं कर्तव्यं वर्तते यत् पुनरपि व्रतोत्सवानां समुचितरूपेण प्रचाराय समुद्योगं कुर्युः येन यथार्थलाभः सम्भवेत्। आशासे संस्कृतपण्डिताः छात्राश्च अस्मिन् विषये विशेषरूपेण ध्यानं दास्यन्ति इति।

---

## महापुरुषाणां चरितावली-पाठः।

मनीषिणो हि मानवजीवनं संग्राम इति कथयन्ति। यथा संग्रामे विरोधिनो जनाः परस्परं संघर्षं युद्धं च कुर्वन्ति तथैव मनुष्याणां जीवने अपि सततमेव बहिः आभ्यन्तरे च युद्धं प्रचलति। यथा बहिः द्वयो विरोधिनोर्मध्ये युद्धं भवति तथैव आभ्यन्तरे सुख दुःखयोः, हर्ष-विषादयोः, जय पराजयोः, लाभाऽलाभयोः, आशा-नैराश्ययोः, धर्माऽधर्मयोः,

परोपकार-भावना न समुदेष्यति ? नेताजी सुभाषचन्द्रबोसस्य स्वदेशानुराग पश्यत। स्वकीयां मातृभूमिं परतन्त्रतायाः आंग्लशासनात् पाशात् उन्मोचयितुं¹ तेन महापुरुषेण किं किं कष्टं न उररीकृतम् ? स हि महानुभावः शीघ्रातिशीघ्र स्वतन्त्रताप्राप्त्यै राष्ट्रियमहासभायाः सम्बन्धं विच्छेद्य कृत्वा अग्रगामिदलस्य सङ्घटनं चकार, देशे नवीनमुत्साहं जनयामास, येन परि मर्त्यं² बहिर्गत्वा विदेशे सैन्यनिर्माणं च अकरोत्। परं प्रतिकूलपरिस्थितिवशात् तेनापि सफलताम् अलभमानो निजान् प्राणानपि तत्रैव समुत्ससर्ज। एतादृशस्य त्यागमूर्तेः वीरपुरुषस्य परमपवित्रं जीवनचरितं पठित्वा को नाम पाषाणहृदयोऽपि जनो देशसेवायाः भावनया स्वयं परिपूर्णहृदयो न भवेत् ? एवमेव लोकमान्यः तिलकः, महात्मा गान्धी, जगदीशचन्द्र बोसः, रवीन्द्रनाथ ठाकुरः, योगिराज श्री अरविन्द इत्येतादयोऽस्मदीया आत्मचिन्तनपरायणा साधवश्च ईदृशा लोकोत्तराः पुरुषा बभूवुः येषां चरितावलोकनेन पदे पदे उत्तमोत्तमा शिक्षा मिलति।

एवमेव विदेशेषु अपि एके ईदृशा महापुरुषा भूताः सन्ति येषां जीवनचरित्रस्य अपठनम् आत्मनो महती हानिः भवतु शक्यते। ते अपि अस्माकं कृते तथैव माननीया अनुकरणीयाश्च सन्ति यथा स्वदेशवासिनः।

---

# महात्मा गान्धी

श्रीमद्भगवद्गीताया दशमाध्यायस्य अध्ययनात् ज्ञायते यत् ये केचन अलौकिक शक्ति सम्पन्ना महापुरुषा महीतले अवतरन्ति³ ते ईश्वरस्यैव अंशभूता भवन्ति। ते देशकालयोः आवश्यकतानुसारं भगवदिच्छया

---

१—छुड़ाने के लिये। २—मदद पर। ३—अवतार लेते हैं।

आयान्ति अलौकिकानि च कार्याणि कृत्वा पुनरपि निवर्तन्ते[१]। वस्तुतः ईदृशा एव पुरुषाः कस्यापि देशस्य विभूतयो भवन्ति। नहि कस्यापि देशस्य गौरव विख्यातिर्वा तस्य देशस्य नदनदीभिः गिरिवरैर्वा भवति अपितु तत्रत्यैः विलक्षण-प्रतिभा-सम्पन्नैः अलौकिकचरित्रशालिभिः महापुरुषैरेव। अस्माकं कृते महतो गौरवस्य अय विषयो वर्तते यत् अति प्राचीनकालात् भारतवर्षे ईदृशानां महापुरुषाणां पुण्यपरम्परा आगच्छति। वाल्मीकिः व्यासः, बुद्धो महावीरः, शङ्करः चैतन्यः, दयानन्दो विवेकानन्दश्च ईदृशा एव भगवदंशभूता महामानवा बभूवुः येषां नामस्मरणमात्रेण अस्माकं मस्तकं श्रद्धया नतं किन्तु गौरवेण समुन्नत भवति। ईदृशेषु एव जगद्वन्दनीयेषु कतिपय महापुरुषेषु विश्वविश्रुतस्यमहात्मनः गान्धी-महोदयस्यापि गणना अस्ति यस्य संक्षिप्ततमः परिचय. पाठकानां पुरस्तात् अत्र दीयते।

महात्मनो गान्धिमहोदयस्य जन्मभूमिः गुजरात प्रान्तस्य प्रसिद्धं पोरबन्दरनामकं राज्यमासीत्। तत्रैव १८६६ तमे ईशवीयवत्सरे एक-स्मिन् प्रतिष्ठिते वणिग्वंशे एतेषां जन्म अभूत्। तस्मिन् समये अस्य पिता श्री करवा गान्धी राजकोटराज्यस्य प्रधानमन्त्री आसीत् अतो गान्धिजीवस्यापि शैशवकालः तत्रैव व्यतीतो बभूव। एतस्य कुलं वैष्णव-धर्मानुयायि आसीत् माता चास्य परमधर्मिष्ठा। अतः बाल्यकालादेव श्री गान्धिजीवः धर्मस्य सदाचारस्य च प्रभावेण प्रभावित आसीत्। इदमेव च कारणमासीत् येन गान्धिमहोदयस्य आदित आरभ्य अन्तपर्यन्तं समस्त-मपि जीवनं धर्ममय सदाचारमय च आसीत्। अस्तु।

तदानीं समाजे बालविवाहस्य प्रथा पूर्णरूपेण प्रचलिता आसीत्। अत. प्रचलितरीत्यनुसारं गान्धिजीवस्यापि विवाहः त्रयोदशे एव वर्षे श्रीमत्या कस्तूरबा नाम्न्या कन्यया सह बभूव। विवाहानन्तर मैट्रिकपरीक्षान

१—लौट आते हैं।

परीक्षामुत्तीर्य¹ इत्येते "बैरिस्टरी" शिक्षाग्रहणार्थं इङ्गलैण्ड देशे गताः। तत्र चतुर्षु वर्षेषु इमां शिक्षां समाप्य ते पुनः स्वदेशं समागताः राजकोट नगरे च न्यायालये वाक्कीलकार्यं कर्तुं प्रारभन्त। परन्तु वाक्कीलकार्यं प्रायेण प्रपञ्चपूर्णं छलकपटमयं असत्यसम्मिश्रं च भवति अतः सत्यहृदयेन भाविमहात्मना च गान्धिमहोदयेन एतस्मिन् कार्ये समीचीना सफलता न लब्धा। कथं च सफलतां लभेत सः? यतो हि स भगवता भारतभूमौ नहि स्वोदरपूरणाय धनार्जनाय वा प्रेषित आसीत् अपितु भारतभुवो भाग्यनिर्माणाय कोटिकोटिमितानां भारतीयानां समुद्धाराय च।

गान्धिमहोदयः वाक्कीलकार्यं कुर्वन् एकदा एव अभियोगमादाय अफ्रीकादेशे गतवान्। तत्र पूर्वत एव बहवो भारतीया निवसन्ति स्म। परं तेषां दशा तत्र अतीव शोचनीया कष्टयुक्ता च आसीत्। इदं दृष्ट्वा गान्धिमहोदयस्य हृदये अतीव दुःखमभूत्। "डरबन" नगरस्य न्यायालये च यदा ते भारतीयवेषानुसारं शिरसि उष्णीषं² धृत्वा गताः तदा तत्रत्येन न्यायाधीशेन ते नितान्तं अपमानिताः उष्णीषस्य अपसारणाय³ च आज्ञापिताः। भारतीयानामीदृशं अपमानं दृष्ट्वा तेषां हृदये ततोऽपि अधिका चिन्ता दुःखम् उद्बोधश्च समुत्पेदे। ततस्ते तत्रैव स्थित्वा न्यायालयकार्यं परित्यज्य तत्रत्यभारतीयानां दशापरिवर्तनाय तुमुलम् आन्दोलनं चालितवन्तः। एतेषां नेतृत्वेन तत्रत्या भारतीया अपि सङ्घटिता बभूवुः। अन्ते च १८९४ तमे वर्षे नेटाल इण्डियन कांग्रेस नामकसंस्थायाः स्थापना अभूत्। गान्धिमहोदयस्य नेतृत्वे अनया संस्थया तत्रत्यभारतीयानां जीवनस्य सर्वेषु अपि क्षेत्रेषु महती क्रान्तिः कृता। अत्रान्तरम् गान्धिमहोदयस्य राजनीतिक्षेत्रस्य प्रारम्भिकः कालः।

यस्मिन् समये गान्धिमहोदयः आफ्रिकादेशे आन्दोलनं कुर्वन् आसीत्, तस्मिन् समये भारतेऽपि स्वराज्यप्राप्तये कांग्रेससभा कार्यं करोति स्म।

---

१—पास कर। २—पगड़ी। ३—उतार देने के लिये।

अफ्रीकातः निवृत्य गान्धिमहोदयः १६१६ तमे वत्सरे भारतीय कांग्रेस-समाया सम्मिलितो बभूव, १६२० तमवर्षाच्च "असहयोग" आन्दोलनं चालयामास । एतस्यैव नेतृत्वे १९३० तमसवत्सरे च कांग्रेसमभया पूर्ण-स्वतन्त्रतायाः प्रस्तावः स्वीकृत तदनुसारं च देशे पूर्वतोऽपि अधिकोत्साहेन असहयोगादि आन्दोलनं चलितुमारेभे ।

१६३२ वत्सरे यदा आङ्गलशासकैः हरिजनानां कृते पृथक् निर्वाचनस्य प्रस्तावः कृतः तदा तस्य विरोधे महात्मना आमरणमनशनं प्रारब्धम् । तेन शासकाः पृथक् निर्वाचनस्य प्रस्ताव परावर्तितवन्तः ।[१] १६४२ तमे सवत्सरे "भारत छोडो" नाम्ना अन्तिममान्दोलनं चालितं गान्धिमहोदयैः यत्कारणात् सार्द्धवर्षद्वयं कारागारं भुक्त्वाऽपि १६४७ समवत्सरे पूर्णस्वतन्त्रतां लब्धवन्त अनेकशतवर्षेभ्यश्च पराधीनं भारतं पराधीनताया उन्मोचितवन्तः ।[२]

इद जानन्त्येव सर्वे यत् स्वतन्त्रताप्राप्तिसमये देशस्य हिन्दुस्तान पाकिस्तान रूपेण द्विधा विभाजनं जातम् । अतः विभाजनात् पूर्वं विभाजनानन्तरं च कलकत्तानगरे नोआखालीनगरे च हिन्दू मुस्लिम सम्प्रदाये भयानक-रूपेण उपद्रवा आरब्धाः । तस्य स्फुलिङ्गाश्च[३] प्रायेण समस्तेऽपि देशे वैर-विद्वेषानल प्रज्वालितवन्तः । अस्मिन्नपि अशान्तिमयपे उपद्रवपूर्णे च समये महात्मा गान्धिमहोदयः शान्तिस्थापनार्थं सुमहान्त प्रयास कृतवान् । अन्ते च अनेन शान्तिप्रयासेन सहैव १६४८ तमे वत्सरे जनवरी मासस्य त्रिंशत्तारिकायां प्रार्थनासभायां गच्छन् एकेन यवनोत्पातपीडितेन गान्धि-महोदयस्य च यवनपक्षपातदृष्टेन "नाथूराम गोडसे" नामकेन युवकेन गुलिकया[४] हत. सन् पाञ्चभौतिक शरीर परित्यज्य चरमां शान्ति लेभे ।

इदमेव महात्मनः अतिसंक्षिप्तम् जीवनचरितं वर्तते । अफ्रीका-गमनादारभ्य मरणकालपर्यन्तं भारतीयस्वतन्त्रतायै भारतीयानां सर्वविध-

१–लौटाया । २–छुडाया । ३–चिनगारियाँ । ४–गोली से ।

तर्हि न ते आत्मनः पुरातनम् इतिहासं नापि ज्ञानविज्ञानादिकमेव यथार्थरूपेण अवगन्तुं शक्नुवन्ति। यद्यपि भूमण्डलस्य विभिन्नभाषासु संस्कृतग्रन्थानाम् अनेके अनुवादाः प्रकाशिताः सन्ति तथापि यथा मूल-ग्रन्थानाम् अध्ययनेन कस्यापि विषयस्य यथार्थज्ञानं भवति न तथा अनु-वादग्रन्थानाम् अध्ययनेन इति सर्वसम्मतः सिद्धान्तः अस्ति। यथार्थ-ज्ञानं तु दूरे तिष्ठतु, अनुवादकानां बुद्धिभेदात्, विचारभेदात्, अज्ञानात्, अर्थपरिवर्तनाद्वा पदे पदे भ्रान्तिरेव जायते। अतो यावत् संस्कृताऽध्ययनं न क्रियते तावत् कोऽपि भारतीयः स्वकीयं साहित्यम् इतिहासं वा वास्त-विकरूपेण वेदितुं न प्रभवति। तस्मात् अवश्यमेव संस्कृतभाषायाः सर्वैरेव भारतनिवासिभिः प्रयासिभिर्वा आर्यसन्तानैः अध्ययनं कर्तव्यम्। बुद्धि-विकासाय वित्तोपार्जनाय कीर्तिविस्ताराय वा यथेच्छम् अन्यदेशीया अपि भाषा अनुशीलनीयाः तत्र नास्ति कस्यापि मतभेदः। यथा यथा अन्य-भाषाणाम् अध्ययनं करिष्यते तथा तथा बुद्धिः विकासं लप्स्यते, ज्ञाने वृद्धि भविष्यति, अल्पज्ञता नङ्क्ष्यति, बहुज्ञता च वर्द्धिष्यते। अतः सर्वथा उचितं भिन्नभिन्नभाषाणाम् अध्ययनम्। परं भारतीयत्वस्य हिन्दुत्वस्य आर्यत्वस्य वा ज्ञानाय तु सर्वतः पूर्वं संस्कृताऽध्ययनं नितान्तमेव आवश्यकं वर्तते।

एतदतिरिक्तं भारतीयसंस्कृतेः रक्षणार्थमपि संस्कृतप्रचारस्य आव-श्यकता वर्तते। भाषायाः साहित्यस्य वा तत्पाठकानाम् उपरि कीदृशः प्रभावः पतति इति बुद्धिमताम् अविदितं नास्ति। अतो यदि वयं संस्कृतं त्यक्ष्यामः तर्हि हठात् अस्माकम् आदर्शाः विचाराः व्यवहाराश्च भारतीया भविष्यन्ति। सततमेव वयम् अवलोकयामः। ये केवलं आङ्ग्लभाषां पठि-तवन्तः ये च केवलं संस्कृतं तेषां विचाराऽचारादिषु पूर्वपश्चिमयोरिव महान् भेदः प्रतिभाति। अतो यथा अस्मासु भारतीयत्वं तिष्ठेत्, यथा च अस्माकं वेषभूषा आचारव्यवहारा रीतयो नीतयश्च भारतीयसंस्कृतेः अनुरूपाः स्युः तथा आचरणीयम्। तस्य च प्रधानं साधनं वर्तते संस्कृत-भाषाया अध्ययनमेव।

अन्यच्च संस्कृतपठनेनैव वयं राष्ट्रभाषायां हिन्द्यां स्वकीयासु मातृभाषासु च नैपुण्यं लब्धुं शक्नुमः। यावत् समीचीनं संस्कृतज्ञानं नास्ति तावत् न आसु भाषासु उत्तमोत्तमं निबन्धादिकं लेखितुं शक्यते, न रमणीया कविता कर्तुं शक्यते नापि समालोचनादिकमेव। न च इमां भाषां विना विश्वमान्यानां वेदोपनिषदां गीतादिग्रन्थानां च वयं मौलिकं स्वाध्यायं कर्तुं प्रभवामो येषां ससरत्यं सर्वेष्वपि सभ्यदेशेषु सुमहान् प्रचारः समादरश्च वर्तते। अपि च संस्कृतज्ञानं विना अस्माभिः स्वकीयानि धार्मिकानुष्ठानानि अपि न विधिपूर्वकं सम्पादयितुं शक्यन्ते नाऽपि संस्कारा एव। यदि वयं संस्कृतं न पठिष्यामः तर्हि स्वपूर्वजानां महान्तम् अपमानं करिष्यामः। तेषाम् उपकारेण च वञ्चिता भविष्यामः। अस्माकमेव हिताय पूर्वजैः सर्वमपि भौतिकसुखं परित्यज्य अरण्येषु उषित्वा विविधशास्त्राणां रचना कृता। अस्माकमेव निःश्रेयसाय कपिलादिमहर्षयो दर्शनशास्त्राणि विरचितवन्तः। वेदाङ्गानि अस्माकमेव विविधज्ञानलाभाय विनिर्मितानि। आदिकविना रामायणी कथा, विशालबुद्धिना भगवता व्यासेन महाभारतञ्च अस्माकमेव कल्याणाय विनिर्मितम्। कविकुलशिरोमणिना कालिदासेन स्वकीयानां काव्यनाटकादीनां रचना विधाय अस्माकमेव शिरांसि उन्नमितानि। कियत् गणयाम? समस्तमपि वाङ्मयं अस्मत् पूर्वजैः अस्माकमेव समुत्कर्षाय हितसाधनाय च महता परिश्रमेण तपश्चर्यया च विरचितं वर्तते। संस्कृत साहित्यं खलु अस्माकं परम्परागतं सर्वोत्कृष्टं पैतृकं धनमस्ति। अस्याम् अवस्थायामपि यदि वयं संस्कृतं न पठिष्यामः, तस्य समादरं न विधास्यामः, पठनपाठनपरम्परया च रक्षणं न करिष्यामः तर्हि कीदृशा वयं बुद्धिहीना अकृतज्ञाश्च भविष्यामः? अतः अन्यभाषाणाम् अध्ययनेन सहैव येन केनापि प्रकारेण संस्कृतस्यापि अवश्यमेव अध्ययनं कर्तव्यम्। अत एव इदानीं भारतहितैषिणः सर्वेऽपि मनीषिणो नेतारश्च संस्कृतप्रचारस्य आवश्यकतां समर्थयन्तो दृश्यन्ते।

अनेके जनाः संस्कृतभाषाम् अतीव कठिनां मत्वा तस्या अध्ययनात्

विरक्ता जायन्ते। परन्तु अयं प्रमादोऽपि सर्वथा असत्य एवास्ति। स्वमातृभाषा परित्यज्य अन्यस्याः कस्याश्चिदपि भाषायाः संस्कृताध्ययनं सर्वथा सुगमं सरलञ्च वर्तते। पठन पाठन पद्धतिः अवश्यमेव सम्प्रति ईदृशी दूषिता वर्तते येन पठने विद्यार्थिनो महत् काठिन्यम् अनुभवन्ति। अत एव अयं प्रवादः प्रचलितो वर्तते यत् संस्कृतभाषा अतीव कठिन-भाषा वर्तते, परन्तु यदि समुचितरूपेण वैज्ञानिकपद्धत्या च शिक्षण्य भवेत्तर्हि अल्पीयसा कालेन संस्कृतस्य पठने लेखने च समुचिता योग्यता लब्धु शक्यते। अतो यथा स्वल्पतरेण कालेन विद्यार्थिनः पठने लेखने भाषणे च समर्था भवेयुः तथा प्रयतनीयं शिक्षकप्रवरैः।

अथ संस्कृतभाषायाः प्रचारस्य केचन उपाया अधस्ताद् निर्दिश्यन्ते येषामुपरि संस्कृताऽध्यापकैः छात्रैः संस्कृतानुरागिभिश्च पूर्णरूपेण ध्यानं दातव्यम्।

१—पाठशालासु अतीव सरलया शैल्या अध्यापनं स्यात्।

२—अध्ययने अध्यापने, वादे विवादे, खेलने कूर्दने, भोजने पाने तथा च समस्तेषु कार्येषु अध्यापकैः छात्रैश्च परस्परं संस्कृतभाषाया एव व्यवहारः कर्तव्यः।

३—पत्रलेखनादिकम् अपि संस्कृतज्ञैः संस्कृतभाषायामेव कर्तव्यम्।

४—प्रतिग्रामं, यदि न भवेत्तर्हि प्रतिनगरं तु अवश्यमेव तन्नत्यैः संस्कृतप्रचारिणी सभा कर्तव्या यस्या अधिवेशने संस्कृतप्रचारविषये भाषणादिकं भवेत्।

५—नगरेषु संस्कृतकन्यापाठशाला अपि स्थापनीयाः। गृहस्थ-जनाश्च कन्यानां संस्कृतशिक्षणाय प्रेरणीयाः।

६—संस्कृतस्य अध्यापकैः छात्रैः तथा संस्कृतज्ञैः ज्योतिर्विद्भिः वैद्यैश्च स्वकीया कन्या अभिनवा वध्वश्च अवश्यमेव संस्कृतं शिक्षणीयाः।

७—राजकीयः शिक्षाविभागः संस्कृतविद्यायाः प्रचारविषये पूर्ण-ध्यानदानाय प्रेरणीयः प्रोत्साहनीयश्च ।

८—सर्वेऽपि संस्कृताऽध्यापकाः छात्रारच संस्कृतभाषाया महत्वादि-विषये व्याख्यानदानाय अभ्यासं कुर्युः । यदा तदा जनसमूहे व्याख्यानं च दद्युः ।

९—संस्कृतज्ञानां जीविकानिर्वाहोचितवृत्ति—स्थिरीकरणाय राज-कीयशिक्षाविभागाः प्रेरणीयाः ।

इमे अत्र कतिपये उपाया अभिनिर्दिष्टाः । अस्मिन् विषये विशेषज्ञा-नाय सार्वभौम संस्कृत प्रचार कार्यालयस्य साहित्यम् अवलोकनीयम् ।

इति कतिपये निबन्धा
लिखिता ज्ञानानुसारमस्माभिः ।
या काचित् त्रुटिरस्मिन्
भवेत्तदर्थं क्षमां याचे ॥

# पत्र-लेखन-पद्धतिः

अत्र अभ्यासार्थं कानिचित् पत्राणि लिख्यन्ते। तदनुसारं छात्रैः पत्रलेखनस्य अभ्यासः कर्तव्यः। सदैव च निवेदनपत्रं समाचारपत्रं वा संस्कृतभाषया एव लेख्यम्।

## विद्यालये प्रवेशार्थं निवेदनपत्रम्

( १ )

श्रीमन्तो माननीयाः अध्यक्षमहोदयाः
संस्कृत महाविद्यालय, वाराणसी,

मान्याः!

सविनयमिदं निवेदनं वर्तते यत् अहमस्मिन् वर्षे देवरियास्थ-श्रीराधाकृष्ण संस्कृत महाविद्यालयस्य प्रथमपरीक्षायां सफलतां लब्ध-वान् अस्मि। इदानीञ्च भवतां महाविद्यालये मध्यमवर्गे पठितुमिच्छामि। अतः स्वकीये विद्यालये मम नाम उल्लिख्य अहं श्रीमदीयः शिष्यत्वेन स्वीकरणीय इति मे सविनयप्रार्थना अस्ति।

आशासे, मदीयमिदं निवेदनं स्वीकृत्य श्रीमन्तो अवश्यमेव मामनु-कम्पयिष्यन्ति इति।

विनीत निवेदकः—
राधामोहन चतुर्वेदी

( २ )

श्रीमन्माननीयाः प्रधानाध्यापकमहोदयाः
संस्कृत महाविद्यालय अयोध्या,

मान्यवर्याः !

श्रीमत्सु सविनय प्रणतिपुरस्सरमिदं निवेदनं वर्तते यदहं वर्षेऽस्मिन् देवरियामण्डलान्तर्गत मनानीछापर ग्रामस्य-श्री विद्याधर्म प्रचारिणी संस्कृत पाठशालातः व्याकरणशास्त्रस्य पूर्वमध्यमपरीक्षायां प्रथमश्रेण्यां समुत्तीर्णोऽस्मि। अतः परं श्रीमतां विद्यालये पठितुकामोऽहं स्वनामोल्लेखनाय निवेदनमिदं समर्पये। अन्यच्च महर्घतामये अस्मिन् समये अहं न खलु अध्ययन सर्वमपि व्ययभारं स्वशिरसा एव वोढुं समर्थ इति समुचितवृत्तिप्रदानार्थमपि तत्रभवतो मुहुर्मुहुरभ्यर्थये।

आशासे श्रीमन्तो निवेदनद्वयमपि इदं स्वीकृत्य अकिञ्चनमिमं जनं दयार्द्रदृष्टिपातेन अनुग्रहीष्यन्तीति—

| ग्राम कोरया पोस्ट जगतौली जिला सारन | भवत्को वशंवदः— अच्युतानन्द दीक्षितः |
|---|---|

## अवकाशार्थं पत्रम्

### ( क )

माननीया अध्यक्ष महोदयाः

श्री नारंग संस्कृत महाविद्यालयः, घुघुली,

श्रीमत्सु सविनयमिदं निवेदनं वर्तते यत् आगामिन्यां माघ शुक्लाष्टम्यां मम कनिष्ठभ्रातुः विवाहोत्सवो भविता। अतोऽहं माघशुक्लपञ्चमीतः आरभ्य माघशुक्लद्वादशीपर्यन्तं एकसप्ताहस्य अवकाशं प्रार्थये।

आशासे विवाहोत्सवे मम सम्मिलनं परमावश्यकं मत्वा श्रीमन्तः अवकाशप्रदानेन मामनुग्रहीष्यन्ति इति।

विनीत निवेदकः—
कृष्णदेव उपाध्यायः
( मध्यमवर्गीयः )

( ख )

लक्ष्मीपुरत
कार्तिक, शुक्ल १० बुधे, २००८

श्रीमत्सु पाठशालाध्यक्ष महोदयेषु
सविनय निवेदनम्,

महोदया ! अहम् अद्य विशेषकारणवशात् विद्यालये उपस्थितो भवितु न शक्नोमि । आगामिनि दिनेऽपि उपस्थिते आशा नास्ति । अतो दिनद्वयस्य अवकाशाय निवेदनमिद श्रीमता सेवाया प्रेषयामि ।

आशा करोमि, श्रीमन्त अवकाशप्रदानेन माम् अनुग्रहीष्यन्ति इति ।

विनीत निवेदक —
राजकिशोर सिंह
( प्रवेशिकावर्गीय )

## मित्रं प्रति पत्रम्

श्रीनगरत
भाद्र शु० ६, सोमवासरे २००७

माननीयेषु सुहृत्प्रवरेषु श्रीद्विवेदिमहोदयेषु
सस्नेह—नमस्कारा,

बहूनि दिनानि व्यतीतानि पर भवताम् एकमपि पत्र मम हस्तगत नाऽभूत् । भवन्त सम्प्रति कुत्र वर्तन्ते किं च कार्यं कुर्वन्ति इति किमपि मम विदित नास्ति । अत एव सम्प्रति वयं अतीव चिन्ताऽकुला सञ्जाता स्म । आशासे इत पर भवन्त पत्रप्रेषणे विलम्ब न करिष्यन्ति, शीघ्रमेव च स्वकीयेन शुभसमाचारेण अस्मान् आनन्दयिष्यन्ति इति ।

अस्माक गृहस्य सर्वोऽपि समाचार समीचीन एवाऽस्ति । अहमपि पाठशालाया परिश्रमेण पठन् अस्मि । विशेषसमाचार भवत पत्र समागते पुन लेखिष्यामि । शीघ्रमेव पत्रप्रदानेन अनुग्राह्या वयमिति—

भवता स्नेहभाजनम्—
आसुरेन्द्र

# मित्रं प्रति पत्रम्

प्रिय रेवतीरमण शर्मन् !

भवता गमनकाले कथितं यत् गृहं गत्वा अहं शीघ्रमेव पत्रं प्रेषयिष्यामि, परन्तु अद्य मासाधिकः कालो व्यतीतः परं भवतः पत्रं न समायातम्। धन्याः सन्ति भवन्तः ! किम् ईदृशी एव भवतां प्रतिज्ञा भवति ? अस्तु। इदं मदीयं पत्रं पठित्वा शीघ्रमेव पत्रोत्तरं देयम्। इदानीं भवान् कुत्र निवसति, किं करोति, किं पठति लिखति, कदा च अत्र आगमिष्यति, गृहस्य च कीदृशः समाचारो वर्तते, स्वास्थ्यं च भवतः कीदृशं सम्प्रति ? इति सर्वमपि शीघ्रतया पत्रद्वारा सूचनीयम्। अत्र सर्वेऽपि भवदीयपत्रस्य प्रतिदिनं प्रतीक्षां कुर्वन्ति।

निजपितृपादेभ्यो मम सादरं प्रणामाः सूचनीयाः । आशासे भवान् अस्मिन् वारे अवश्यमेव पत्रं प्रदास्यतीति।

सस्नेहम्
भवतः अभ्युदयाकांक्षी
प्रियव्रत शर्मा

# गुरुसमीपे पत्रम्

गोरखपुरतः
आश्विन, कृ० ५—गुरौ २००७

श्रीमत्सु श्रद्धेयचरणकमलेषु

सविनयं कोटिशः प्रणामाञ्जलयः !

पूज्यपादानां कृपया वयं सर्वेऽपि कुशलिनः स्मः। आशासे श्रीमन्तोऽपि सपरिवाराः कुशलिनो भविष्यन्ति।

विशेषसमाचारः अयं वर्तते यत् अहम् अस्मिन् वर्षे प्रथमश्रेण्यां समुत्तीर्णः अस्मि। मम विद्यालयस्य अन्ये अपि विद्यार्थिनः समुत्ती

सन्ति । अस्य वर्षस्य परीक्षाफलं बहु समीचीनं वर्तते । ग्रीष्मावकाशानन्तरं पुनरपि वयं परिश्रमेण पठिष्यामो येन अग्रिमवर्षेऽपि परीक्षायां सफला भविष्यामः ।

श्रीमतां वशंवदः—
रामलखन पाण्डेयः

# पितुः समीपे पत्रम्

अयोध्या-गुरुकुलतः
भाद्र कृष्णाष्टमी २००८

श्रीमत्सु पूज्यपितृचरणकमलेषु
कोटिशः सविनय-प्रणतिततयः ।

बहूनि दिनानि व्यतीतानि परं श्रीमतां किमपि पत्रं न आगतम् । अहमत्र भवतामादेशानुसारं परिश्रमेण स्वपाठ्यग्रन्थानाम् अध्ययनं करोमि । परन्तु मम समीपे सम्प्रति अनेकानि आवश्यकवस्तूनि न सन्ति । पाठ्यपुस्तकानि सर्वाणि न सन्ति, लेखनी-मसीपात्रादिकमपि समीचीनं नास्ति । खाद्यपदार्थानामपि अल्पता वर्तते, वस्त्राणि च मम प्रायेण जीर्णतां गतानि सन्ति । अतः श्रीमद्भिः शीघ्रातिशीघ्रं ५०) रूप्यकाणि प्रेषणीयानि । अत्र विलम्बो न कर्तव्यः । अहं नवरात्रावकाशे आगमिष्यामि ।

भवदीयः आज्ञाकारी
ब्रह्मचारी श्रीकृष्णः

# प्रस्ताव-समर्थन-पद्धतिः

अत्र समासतः कृते प्रस्तावकरणस्य, व्याख्यानारम्भस्य तदुपसंहारस्य च कानिचित् निदर्शनानि दीयन्ते । छात्रैः एतेषामभ्यासं कृत्वा अस्मिन् पुस्तके लिखितानां निबन्धानां व्याख्यानरूपेणापि कथनस्य अभ्यासः कर्तव्यः ।

नार्हति। अतोऽहं सभापतिपदाय समादरणीयानां श्रीयुत महोदयानां नाम सहर्षमनु प्रस्तौमि।

मन्ये, भवन्तः समर्थनेन अनुमोदनेन च सहर्षमिमं प्रस्तावं स्वीकरिष्यन्तीति।

## अनुमोदनं समर्थनं च ।

(१) अहमेतस्य प्रस्तावस्य हृदयेन समर्थनं करोमि।

(२) श्रीमता प० महोदयेन योऽयं प्रस्तावः सभापतिपदाय विहितः स सर्वथा श्लाघनीयः सर्वेषां च कृते उत्साहवर्द्धको वर्तते। अतोऽहं अस्य प्रस्तावस्य हार्दिकं समर्थनं करोमि।

## अथ व्याख्यान पद्धतिः ।

### ( क )

परमसम्माननीयाः सभापतिमहोदयाः ।

आदरणीयाः सभासदश्च ।

अत्र अहं श्रीमतामग्रे विषयेऽस्मिन् किमपि वक्तुमिच्छामि। यद्यपि अस्मिन् विषये मम अधिकं ज्ञानं नास्ति। शुद्धशुद्ध-संस्कृतभाषणस्यापि अभ्यासः नास्ति। तथापि उत्साहवशात् यथाशक्ति किमपि अवश्यमेव वक्तुं समीहा वर्तते।

आशां करोमि, श्रीमन्तः मम त्रुटीनाम् उपरि ध्यानं न दास्यन्ति अपि च व्याख्यानं श्रुत्वा मम उत्साहं वर्धयिष्यन्ति। (अतः परं स्वविषये व्याख्यानं देयम्)

### ( ख )

परमादरणीयाः सभाध्यक्ष महोदयाः! समुपस्थिताः मान्याः मनीषिणः!

आदरणीयाः सभासदः! प्रवासरक्षाग्रजाः !

महतः समुल्लासस्य परमानन्दस्य च अय विषयो वर्तते यत् वयमद्य सर्वेऽपि सुरभारतीसेवका नानास्थानेभ्यो भारतीयसंस्कृतेः प्राणभूतायाः संस्कृतभाषायाः प्रचारविषये विचारविनिमय कर्तुं समुपस्थिताः स्म । भवादृशानां विद्वद्वरेण्यानां महति समुदायेऽस्मिन् यद्यपि मादृशस्य स्वल्पबुद्धेर्बालकस्य व्याख्यानदान धृष्टतामात्र साहसमात्रमेव वा वर्तते तथापि यथाशक्ति मातुः सेवायां सर्वेऽपि बालकाः समानाधिकारा भवन्ति इति नियमानुसारं अहमपि यथाशक्ति यथाबुद्धि च मातुः सुरभारत्याः समुद्धारविषये किमपि वक्तुमिच्छामि । आशासे महानुभावाः श्रीमन्तो मदीयमिदं बालचापल्यं मदीयाः त्रुटीश्च अवश्यमेव क्षमित्वा माम् अनुग्रहिष्यन्ति इति ।

( ग )

श्रीमन्तो माननीयाः सभापतिमहोदयाः, आदरणीयाः, सभासद, प्रिया विद्यार्थिबन्धवश्च !

अद्य खलु महतः सौभाग्यस्य अयं विषयो वर्तते यदह श्रीमतां पुरस्तात् संस्कृतभाषायाः प्रचारविषये किमपि कथयितुं श्रीमता सभापतिमहोदयेन आदिष्टोऽस्मि । यद्यपि विद्यावयोवृद्धानां श्रीमतां पुरस्तात् मम भाषणं सर्वथा अनधिकारचेष्टितमेव वर्तते तथापि मन्ये क्षमाशीलाः श्रीमन्तो मम इदं बालचापलं क्षमिष्यन्ते, मम भाषणे याः काश्चन त्रुटयो भवेयुः तदर्थमपि च क्षमाप्रदान करिष्यन्ति ।

## उपसंहारः ।

१—माननीयाः !

मया पूर्वमेव निवेदितं यत् अस्मिन् विषये मम ज्ञानं स्वल्पं वर्तते । अतः सम्प्रति अहं स्वव्याख्यानं समाप्तं करोमि ।

२—मान्यसभासदः !

अतः परं अभ्यासाभावात् मया अधिकं वक्तुं न शक्यते । अतो इदम् आत्मनो व्याख्यानम् अत्रैव समाप्य विरमामि ।

३—माननीया पारिषद्याः !

भूयान् खलु मया समयो गृहीतः श्रीमताम् । अन्ये च अनेके सुयोग्या वक्तारो वर्तन्ते येषां व्याख्यानश्रवणं नितान्तमावश्यकं वर्तते । अतोऽहं स्वकीयां वक्तृतां अत्रैव उपसंहरन् श्रीमतः क्षमां याचे ।

४—सभापतिमहोदयाः सभ्याश्च !

एवं मया अस्मिन् विषये यथाशक्ति स्वकीया विचारा भवतां पुरस्तात् उपस्थापिता । अत्र यदि काचित् त्रुटिः स्यात् अनुचितं वा किमपि उक्तं स्यात् तर्हि तदर्थमहं क्षमां याचे ।

---

